र्थस्यायोग इति सुधायामपि मुख्यार्थानुपपत्ति-
दर्शनमित्युक्तम् । अत्र मुख्यायोग इति वक्तव्ये
यत्पूर्वायोग इत्युक्तं तल्लक्षितलक्षणासंग्रहार्थम् । तत्र
लक्ष्यानुपपत्तेरपि हेतुत्वात् ॥

लक्षणादिहेतूक्तिः ॥ ६५ ॥

## अथ लक्षणादेरभिधातो भेदसमर्थनम् ॥ ६६ ॥

ननु गङ्गाशब्दस्य पूर इव तीरेपि, सिंहशब्दस्य
च सिंह इव माणवकेपि शब्दान्तरे क्लृप्ता शक्ति-

---

त्वात् । अन्यथा मुख्यामुख्यार्थबाध इत्युच्येतेति । तदसदिति भावेन-
सुधोक्तमेवाह—अत्रेति । अनुव्याख्यानशेषे ॥

लक्षणादिहेतूक्तिः ॥ ६५ ॥

## अथ लक्षणादेरभिधातो भेदसमर्थनम् ॥ ६६ ॥

पूर्वायोगे परग्रह इत्यस्य सुधोक्तदिशा अमुख्यवृत्तिसत्त्वोपपा-
दनपरत्वरूपमर्थान्तरं मत्वा सुधोक्तिं साधयिष्यन्नाक्षिपति—**नन्विति** ।
यद्यप्येतन्मणिकृतैव लक्षणावादे आशङ्क्य निरस्तम् । तथापि तदुक्त-
युक्तिमरोचमानो व्युत्पादनार्थमाधिकयुक्तिविवक्षार्थं च पुनरत्रोपक्षिप्त-
वानित्यदोषः । **शब्दान्तर इति** । तीर[1]माणवकादिशब्दान्तरे[2]
नानार्थकाक्षादिशब्दान्तर इति[3] वार्थः ॥

---

[1] तीरपदं न—उ.　[2] रे नाना—उ.　[3] ति चा—उ.

रेवास्तु । किं लक्षणाकल्पनेनेत्यक्षादिशब्दवन्ना-नार्थतैवेति चेन्न । तीरादिशक्तौ प्रमाणस्य [1] मध्यमवृद्धव्यवहारदर्शनादेरभावेप्यनुसंहितलक्षणान्यायस्य पुंसो गङ्गादिशब्देन तीरादिप्रतीतेः ॥

न च घोषादिपदसमभिव्याहार एव तत्र प्रमाणमिति वाच्यम् । इन्द्रियस्य रूपादिनेव गङ्गाशब्दस्य तीरेण क्लृप्तात्परंपरासंबन्धादेव बोधकत्वोपपत्तौ समभिव्याहारस्य साक्षात्संबन्धरूपशक्त्यकल्पकत्वात् । अन्यस्मिन् [2] शब्दे क्लृप्तादपि स्वस्मिन्क्लृप्तस्यान्तरङ्गत्वात् । अक्षादि-

---

तर्ह्यनेकार्थत्वं गङ्गादिशब्दस्य स्यादित्यतोस्तु तदित्याह— **अक्षादीति । मध्यमेति** । तद्व्यवहारस्यैव शक्तिग्राहकत्वादिति भावः । दर्शनादेरित्यादिपदेन प्रागुक्तव्याकरणोपमानकोशादिग्रहः। **अनुसंहितेति।** लक्षणास्थले यो न्यायो मुख्यार्थबाधादिस्तदनुसंधानवतः पुंस इत्यर्थः ॥

ननूक्तस्थले गङ्गापदात्तीरधीर्घोषपदसमभिव्याहारादेव पदान्तर-समभिव्याहारेण पदाज्जायमानार्थधीश्च शक्त्यैवेत्याशङ्क्य निराह— **न चेति ।** न तु लक्षणान्यायानुसन्धानमित्येवकारार्थः । **इन्द्रियस्य रूपादिनैवेति** । संयुक्तसमवायरूपपरंपरासंबन्धाद्यथा बोधकत्वं तथा शक्यसंबन्धरूपक्लृप्तपरंपरासंबन्धादेव बोधकत्वोपपत्तावित्यर्थः ॥

शब्दान्तरे क्लृप्तशक्तिरेवास्त्वित्युक्तस्योत्तरमाह — **अन्यस्मिन्निति ।** स्वस्मिन् गङ्गाशब्द इत्यर्थः । शक्यसंबन्धस्य क्लृप्तत्वादिति भावः । अक्षादिशब्दवन्नानार्थतेत्युक्तं तन्निराह— **अक्षादीति ।**

---

[1] मध्यमपदं न—**क.** [2] अन्यत्र क्लृप्ता—**क.**

शब्दार्थास्तु नान्योन्यं संबद्धाः ॥

किं च तीराद्यनन्तैः सह क्लृप्त[1]पूररूपैकशक्यसंबन्धेषु वृत्तित्वरूपधर्ममात्रकल्पनं लघु । तेष्वनन्ताः शब्दनिष्ठाः शक्तिरूपा[2] धर्मिणस्तद्ग्राहका वृद्धव्यवहारास्तद्ग्रहास्तत्स्मृतयश्चेत्यनेककल्पना गुर्वी ॥

मणौ तु तीराद्यनन्तेषु शक्यसंबन्ध[3]स्त्वेकः शक्तयस्त्वनन्ता इति लाघवमुक्तम् । तन्न । शक्यसंबन्धानामपि संयोगादित्वेनानन्तत्वात् ।

---

अन्योन्यसंबन्धत्वे हि प्रवाहसंबन्धतीरे गङ्गाशब्दस्येवाक्षादिशब्दस्यापि क्वचिच्छक्तिः तत्संबद्धे चार्थे लक्षणेति स्यात् न चैवमित्यर्थः । यद्यपि दिङ्नेत्रघृणिभूजलादीनामस्ति संयोगः संबन्धः । तथापि तत्र कस्य शक्तता कस्य शक्यसंबद्धतेति विनिगमकाभावात्सर्वस्य शक्ततैवेति भावः ॥

लाघवयुक्त्या च लक्षणैव युक्तेत्याह—**किंचेति** । [4]**पूररूपेति** । [5]पूरादिरूपेत्यर्थः । नद्यां घोष इत्यत्र पूरसंबन्धस्तीरे मञ्चाः क्रोशन्तीत्यत्र मञ्चसंबन्धः पुरुषे मार्गाश्चलन्तीत्यत्र मार्गसंबन्धः प्राणिष्वित्यादिरूपसंबन्धेष्वित्यर्थः । **तेष्विति** । तीरादिषु विषय[6] इत्यर्थः । **उक्तमिति** । लक्षणावाद उक्तमित्यर्थः । **संयोगादित्वेनेति** । यत्र गुण्यादिपदेन गुणादेर्लक्षणा तत्र लक्ष्येण सह संबन्धस्य समवायत्वेन[7] विषयेण विषयिणो लक्षणास्थले स्वरूपसंबन्धत्वेनेत्यादिरादिपदार्थः ॥

---

1 प्तरू–**क. ग.**　2 पध–**क.**　3 न्ध ए–**क. ग.**　4 पूर्वरू–**उ.** पूरेति शोधितमस्ति–**मु.** पररू–**नं.**　5 परादि–**नं. उ.**　6 येष्वित्य–**उ.**　7 यित्वे–**उ. ए.**

संबन्धत्वेनैक्ये तु शक्तित्वेनैक्यमिति समम् । प्रत्युत त्वन्मते ईश्वरेच्छारूपा शक्तिः स्वरूपेणै-वैका, शक्यसंबन्धास्तु स्वरूपेणैव नानेति विपरीतं लाघवम् ॥

किं च तीरमात्रशक्तावतिप्रसङ्गेन गङ्गातीरे शक्तेर्वक्तव्यतया नागृहीतविशेषणान्यायेन तीरार्थे प्रयोगेपि पूरशक्तिरावश्यकी ॥

अपि च गङ्गाशब्दस्यानेकार्थत्वेऽ[1]नुपपत्तिपुरस्सरं

---

प्रकारान्तरेण तीरादौ न शक्तिर्गङ्गादिपदस्येत्याह—**किं च तीरमात्रेति** । 'नागृहीतविशेषणा विशेष्येषु बुद्धिरुत्पद्यत' इति न्यायेन प्रथमोपस्थितत्वेन तत्र शक्तेरावश्यकत्वे सति शक्यसंबन्धादेव तीरधीसंभवान्न शक्तिकल्पनेति भावः ॥

ननु—यथा लक्षणापक्षे पूरेणोपलक्षणेन व्यावृत्ततीरविशेषस्या न्वयो न तीरान्तरस्य तथा पूरोपलक्षिततीरे शक्तिरस्तु न तु तीरे पूरे चेति (चेत् ।) गङ्गापदशक्तौ पूरस्य शक्यत्वेन विशेषणत्वे संभवति नोपलक्षणत्वं युक्तम् । विशेषणत्वासंभवे सत्येवोपलक्षणत्वात् । अतः पूर एव शक्तिः । किं च तीरशक्तावुपलक्षणत्वं पूरस्य न शक्यतावच्छे-दकत्वम् । नापि धेनुपदे गोत्वस्येव शक्त्युपाधित्वम् । गौरवादिति भावः ॥

लक्षणानभ्युपगतौ बाधकान्याह—**अपि चेति** । ननु—गोशब्दस्य नानार्थत्वेपि नास्ति संदेहजनकत्वमिति तद्वत्स्यादित्यत

---

[1] त्वे पूरा–**रा. ग.**

तीरधीर्न स्यात्। न ह्यक्षादिशब्देषु तथाधीः। गङ्गां पश्येत्यादौ तीरं पूरं वेति संदेहश्च स्यात्। अक्षा[1]न्यस्येत्यादौ तद्दर्शनात्। गां पश्येत्यादावपि सास्नादिमद्व्यक्तौ बाणादौ च शक्तिस्मृतावस्त्येव संदेहादिः॥

गङ्गां पश्येत्यादौ तु तीरे वृत्तिज्ञानेऽपि न संदेह इति विशेषः। अन्यथा शक्तिरूपसाक्षात्संबन्धमादाय परंपरासंबन्धरूपलक्षणापलापे; कुठारस्य काष्ठेन, व्रीह्यादिद्रव्यस्य यागेन, श्रोत्रस्य च शब्देन साक्षात्संबन्धो दृष्ट इति; हस्तस्य काष्ठेन द्रव्यसंस्कारस्य यागेन चक्षुषो घटरूपेण च स स्यात्। रूढिमादाय योगापलापश्च स्यात्। द्वारशब्दस्यैव द्वारविशिष्टापिधाने च शक्तिकल्पनेनाध्याहारश्च न सिध्येत्॥

---

आह[2]—**गंगां पश्येत्यादावपीति**। अन्यथेत्यस्यैव विवरणं **शक्तिरूपेत्यादि**। **व्रीह्यादिद्रव्यस्येत्यस्य**—पुरोडाशाज्यादिद्रव्यस्येत्यर्थः। तस्यैव साक्षाद्देवतोद्देशेन द्रव्यत्यागरूपयागान्वयात्। **हस्तस्येति**। कुठारादि[3]ग्राहिण इत्यर्थः। **द्रव्यसंस्कारस्येति**। प्रोक्षणविलापनादेः। **स इति**। साक्षात्संबन्धः। **योगेति**। अवयवशक्तिरूपयोगस्यावयवार्थद्वारा समुदायार्थबोधकत्वेन परंपरासंबन्धरूपत्वाद्रूढेः साक्षात्संबन्धत्वादिति भावः। योगापलापश्चेत्यनन्तरं कार्य इति शेषः। तेनादायेति साधु। **अध्याहारश्चेति**। पिधेहिपदाध्याहार इत्यर्थः॥

---

1 न्पश्य–**रा. ग.** 2 ह–गांप–**नं. उ. ए.** ‘**गं**’ इति पूरितम्–**मु.** 3 रग्रा–**नं. ए.**

**ननु—रूढिरूपैकविशेषणानुसारिरीत्यैव न शब्दसामान्यवृत्तिनिर्णयः; किंतु सर्वविशेषानुसारिरीत्यैवेति चेत्समं प्रकृतेपि ॥**

**यद्यपि येन पुंसा गङ्गायां घोष इति तीर एव प्रथमप्रयोगो गृहीतः । तस्य तत्र शक्तिग्रहोस्ति ।**

रूढिमादाय योगापलापश्च स्यादित्युक्तदोषे परिहारमाशङ्कते—**नन्विति** । निर्णय इत्यनन्तरं येन योगापलापः स्यादिति योज्यम् । **सर्वविशेषेति** । साक्षात्संबन्धस्य वृत्तित्वकल्पनं रूढिरूपैकविशेषानुसारि तथा च शब्दसामान्यवृत्तिकल्पने घटादिशब्दनिष्ठरूढिरूपविशेषानुसारिरीतिरिव कुम्भकारादिशब्दनिष्ठपरंपरासंबन्धरूपयोगरूपविशेषानुसारिरीतिरप्यनुसर्तव्या । अन्यथा तत्र शब्दादर्थाप्रतीत्यापातात् । एवं च तद्रीत्या वृत्तिनिर्णये योगादिवृत्तिरावश्यकीति चेत् । तर्हि मुख्यवृत्तिरूपविशेषानुसारिरी[1]तेरिव मुख्यार्थधीपूर्वकप्रतीतिस्थलीयलक्षणादिविशेषानुसारिरीतेरप्यनुसर्तव्यत्वात् । तद्रीत्या लक्षणादिवृत्तिरभ्युपेयेति भावेनाह—**समं प्रकृत्येकेपीति** ॥

ननु—पूर इव तीरेपि गङ्गापदस्य व्युत्पत्तिग्रहे[2]णार्थप्रत्ययसाम्येऽपि कुतो न मुख्यता तीरे गङ्गाशब्दस्य। न च शक्तिग्रहो भ्रमः। तज्जन्यार्थप्रतीतेः संवादेन प्रमात्वानुभवादित्यत आह—**यद्यपीति** । यद्वा प्रागपि चेत्यादिनोक्तं पक्षं मणावन्येत्वित्यादिनानूद्य लक्षणायामव्युत्पन्नो बाह्य इत्यादिना तत्र दूषणं यदुक्तं तदनूद्य निराह—**यद्यपीत्यादिना** ॥

---

[1] रीतिरि—नं. उ. [2] हृणार्थ—नं उ.

तथापि तेन गङ्गायां मत्स्यः तीरे घोषः तीरं न गङ्गा इत्याद्युत्तरबहुप्रयोगदर्शनात्स[1]भ्रम एव। पूर्वं मम तीरधीस्तु असाधुशब्दादिव शक्तिभ्रमादिति निश्चीयते। तस्याः प्रमात्वमपि वह्निमति धूमभ्रमजन्याया अनुमितेरिव यादृच्छिकम्॥

एतेन संबन्धसादृश्ययोस्तद्धितमुत्पाद्य तस्य लुप्य[2]भिधयैव सर्वं सेत्स्यति किममुख्यवृत्त्येति निरस्तम्। तथात्वे पूरानुपपत्तिपुरस्सरं तीरप्रतीत्यादेरयोगात्। न हि हरीतक्यादिशब्दा[3]द्वृक्षानुपपत्तिपुरःसरं फलधीः॥

---

यत्तु सुधायां 'पूर्वायोगे परग्रहः' इत्यस्यार्थान्तरं[4] वक्तुं सादृश्यसंबन्धयोस्तद्धितमुत्पाद्य तस्यापि लुपि कृत इत्यादिना लक्षणादिवृत्त्यपलापचोद्यमनूद्य निरस्तं तन्निष्कृष्याह—**एतेनेति**। गङ्गासंबन्धीत्यर्थे सिंहसदृश इत्यर्थे च गङ्गादिशब्दात्तस्येदमिति सूत्रेण वा 'तद्धितार्थ' इति सूत्रेण वाण्प्रत्यये तस्य लुपि कृते 'लुपि युक्तवद्व्यक्तिवचन' इति सूत्रेण पूर्ववल्लिङ्गवचनयोः प्राप्तत्वेन गङ्गासंबन्धीत्यर्थे गङ्गायामितिशब्देन लक्षणां विनैव गङ्गासंबन्धितीरप्रतीतेः सिंहसदृशमाणवकप्रतीतिश्चोपपत्तेः। यथा हरीतक्यादिशब्दात्फलेर्थेऽण्प्रत्यये तस्य लुप्चेति सूत्रेण लुपि सति लुपियुक्तवद्व्यक्तिभावे हरीतकीति रूपम्। तद्वदिति भावः। लुपीत्यनन्तरं कृते सतीति शेषः। तेनोत्पाद्येति ल्यबन्तप्रयोगस्य साधुत्वं ज्ञेयम्। क्वचित्कृत इत्यपि पाठः॥

---

[1] तसत्त्वाद्भ्रम–**सु.** तस तत्र–**क.** [2] पि कृतेभिधयै–**सु. क.** [3] ब्देद्वृ–**क.** [4] 'वक्तुं' इति नास्ति–**उ.**

तस्माद्गङ्गा[1]शब्दस्य तीरादिशक्तौ प्रमाणाभावाद्गौरवात्पूरादिशक्तेरावश्यकत्वात्पूरानुपपत्तिपुरःसरमेव तीरादिबोधकत्वादसन्देहादतिप्रसङ्गाच्चेति हेतुषट्कान्न तीरादौ शक्तिः ॥

न च तीरशूर[2]शब्दाध्याहार एव तर्ह्यस्त्विवति वाच्यम् । निराकाङ्क्षत्वात् । गङ्गासिंहशब्दयोर्वैयर्थ्या[3]च्च । अवैयर्थ्याय गङ्गायां मत्स्यस्तीरे घोष इत्याद्यध्याहारे च गौरवम् । प्रतीतैकवाक्यताभङ्गश्च ॥

द्वारमित्यादावध्याहार एव । न तु द्वारशब्दस्य पिधाने लक्षणा । साकाङ्क्षत्वात् । अवैयर्थ्याद्द्वारबोधकाभावाच्च । तद्बोधार्थं शब्दान्तराध्याहारे तु ————द्वारशब्दस्वारस्याविरोधिपिधेहि[4]शब्दाध्याहार एव युक्तः ॥

---

प्रागुपपादितदूषणषट्कं संग्रहेण बुद्ध्यारोहायानुवदन्नुपसंहरति— **तस्मादिति** । तस्य विवरणं गङ्गेत्यादि पञ्चम्यन्तषट्कम् ॥

प्रकारान्तरेण लक्षणाद्यमुख्यवृत्त्यपलापमाशङ्क्य निराह – **न च तीरेति** । घोष इत्यत्र तीर घोष इत्यन्वयाय तीरपदस्य, सिंहश्चैत्र इत्यत्र शूरश्चैत्र इत्यन्वयाय शूरपदस्य, अध्याहारः द्वारमित्यादाविव । अन्यथा तत्रापि लक्षणादि स्यादिति भावः ॥

[1] ङ्गादिश–क. [2] पूर–क. सु. [3] र्थ्यप्रसङ्गात्–सु. र्थ्यापातात्–क.
[4] हि पदा–सु. ग.

ननु—तथाप्यर्थापत्त्यैव तीरशूरधीरस्तु वक्तु-राप्तेः प्रतीता[1]र्थानुपपत्तेश्च विरोधे[2]नार्थान्तर-कल्पनादिति चेन्न। लक्षणाद्यकल्पनेऽबोधकं पदं प्रयुञ्जानस्याप्तत्वानिश्चयेनाप्तत्वरक्ष[3]णार्थमेव तत्क-ल्पनात् ॥

तदेतदभिप्रेत्योक्तमनुव्याख्याने 'पूर्वायोगे परग्रहः' इति ॥

अस्य चाक्षादिशब्दवन्नानार्थत्वपक्षे तद्धित-लोपपक्षे पूर्वस्य प्रथमप्रतीतस्य[4] पूरस्यायोगे परस्य चरमप्रतीतस्य तीरस्य ग्रहः प्रत्ययो दृश्यते स न स्यात्। [5]इति। अध्याहारपक्षे पूर्वस्य क्लृप्तस्य पदस्यायोगेऽभावे परस्य कल्प्य-स्याध्याहार्यस्य पदस्य ग्रहो[6] द्वारमित्यादौ ॥

अत्र तु गङ्गापदं विद्यत इति अर्थापत्तिपक्षे पूर्वस्य प्रथमप्रतीतस्यायोगेऽनुपपत्तौ प्राप्तायां पर-

---

यदपि सुधायां 'नन्वत्रानुपपत्तेरर्थप्रतीतिहेतुत्वे अर्थापत्तिरेवा-स्त्वि'त्यादिना लक्षणाद्यपलापचोद्यं प्रकारान्तरेणानूद्य समाहितं, तन्नि-ष्कृष्य दर्शयति—**ननु तथापीति** ॥

प्रागुक्तपक्षचतुष्टये उक्तदोषाणां मूलारूढतां व्यनक्ति—**अस्य चेति**। अनुव्याख्यानशेषस्ये[7]त्यर्थः। इत्यर्थ इत्यनेनान्वयः। स न

---

[1] अर्थपदं न—**क.** [2] धिनो—**क.** [3] क्षार्थ—**रा. सु. ग.** [4] रूपस्या—**रा. ग.** [5] 'इति' इति नास्ति—**सु.** [6] हो भवति—**सु. ग.** हो भवतीति—**क.** [7] स्य चेत्य—**उ.**

स्यास्तन्निर्वाहिकायाः लक्षणायाः ग्रहः स्वीकार इत्यर्थः । तस्माद्गङ्गाशब्दादेस्तीरादौ लक्षणादिरेव न शक्तिः ॥

ननु शब्दस्यार्थे शक्तिर्नाम तज्ज्ञानजनकत्वम्। तच्च गङ्गाशब्दादेस्तीरादाव[1]स्तीति चेन्न। अत्र शक्तिशब्देन जनकत्वप्रयोजकस्य शब्दस्यार्थेन सह साक्षात्संबन्धस्याभिप्रेतत्वात् । उक्तं व्याख्याने—

नित्ययोगेपि शब्दानामर्थेनैव निवार्यते ।

इति ॥

लक्षणादेरभिधातो भेदसमर्थनम् ॥ ६६ ॥



## अथ लाक्षणिकादेरनुभावकत्वसमर्थनम् ॥ ६७ ॥

यत्तु मणावुक्तम्—

वाचकमेवानुभावकम् । लाक्षणिकादिकं तु

---

स्यादितीत्यत्र विद्यत इतीत्यत्र चार्थपदं योज्यम् । नानार्थत्वपक्षे गङ्गादिपदस्येति योज्यम् । मण्यादिरीत्या शङ्कते—**ननु शब्दस्येति** । **उक्तं हीति** । आनुमानिकपादे ॥

लक्षणादेरभिधातो भेदसमर्थनम् ॥ ६६ ॥

अथ लाक्षणिकादेरनुभावकत्वसमर्थनम् ॥ ६७ ॥

**मणावुक्तमिति** । लक्षणावादे । **वाचकमिति** । गङ्गायां घोषः

---

[1] स्त्येवेति—सु.

स्मारकमेव । शक्तत्वस्यैवानुभावकत्वे तन्त्रत्वात् । न च सम्बन्धमात्रं तत्र तन्त्रम् लाघवादिति वाच्यम् । घटशब्दस्यापि कार्यकारणसम्बन्धेनाकाशानुभावकत्वापातात् ॥

नापि वृत्तिमात्रं तन्त्रम्। वृत्तित्वं हि शाब्दानुभवानुकूलपदपदार्थसंबन्धत्वम् । तथा च शाब्दानुभवानुकूलत्वे ज्ञाते तद्घटितवृत्तित्वज्ञानम्, वृत्तित्वे च ज्ञाते तदवच्छेदेन शाब्दा[1]नुभवानुकूलत्वज्ञानम्, इत्यन्योन्याश्रयात् ॥

तीरस्यानुभवस्तु गङ्गापदस्मारिततीरान्वितघोषानुभावकेन घोषपदेनैव । एतेन लाक्षणिकमेवानुभावकं न तु वाच[1]निकामिति वैपरीत्यशङ्कानिरस्ता । सर्वत्र वाक्ये शक्तपदनियमवल्लाक्षणिकपदनियमाभावेन शक्ते[2] अनुभावकताया आवश्यकत्वादिति । तन्न ॥

पदं न स्मारकमित्युक्तत्वेन गङ्गापदस्याननु-

सिंहश्चैत्र इत्यादौ गङ्गादिपदं घोषादिपदार्थान्विततीरादिरूपस्वार्थानुभावकं नेत्यर्थः । केन तर्हि घोषाद्यन्विततीराद्यनुभव इत्य[3]त आह— **तीरस्येति** । एतेनेत्युक्तं व्यनक्ति—**सर्वत्रेति** । **पदमिति** । वाक्यस्थं पदं न पदार्थस्मारकमिति भट्टाभिमताभिहितान्वयभङ्गे उक्त-

---

[1] चकमि—रा. सु. [2] क्तेरनु—सु. क. [3] त्युक्त आ—उ.

**भावकता[1]यामबोधकत्वापातात् । लक्षणादेरनुभावकत्वातन्त्रत्वे स्मारकमात्रस्य कार्यकारणसम्बन्धस्यैवावृत्तित्वप्रसङ्गाच्च ॥**

**न च शाब्दानुभवानुकूलस्मृतिहेतुत्वमात्रेण वृत्तित्वमिति वाच्यम् । उक्तस्मृतिहेतुत्वेपि वृत्तित्वादेस्तन्त्रत्वेऽन्योन्याश्रयादिप्रसङ्गेन शक्तत्वमेव तन्त्रमिति सुवचत्वात्साक्षात्परंपरासाधारणशक्ति[2]संबन्धित्वं वृत्तित्वमिति निरुक्तौ चान्योन्या-**

त्वेनेत्यर्थः । **अबोधकत्वेति ।** स्मृत्यनुभवान्यबोधाभावादिति भावः ॥ **अवृत्तित्वप्रसङ्गाच्चेति ।** अन्यथा घटादिशब्दस्यापि त्वन्मते कार्यकारणसम्बन्धेनाकाशस्मारकत्वादाकाशे वृत्तिमत्त्वप्रसङ्गादिति भावः । **हेतुत्वमात्रेणेति ।** लक्षणादेरित्यनुकर्षः । **उक्तस्मृतिहेतुत्वेपीति ।** शाब्दानुभवानुकूलस्मृतिहेतुत्वेपि । लक्षणादेरित्यनुषङ्गः । तस्येति शेषः । उक्तरूपस्मृतिहेतुत्वस्य वृत्तित्वलक्षणात्वगौणीवृत्तित्वतंत्रत्वे सति शाब्दानुभवानुकूलत्वे ज्ञाते तद्घटितवृत्तित्वज्ञानं वृत्तित्वे च ज्ञाते तदवच्छेदेन शाब्दानुभवानुकूलत्वज्ञानमिति प्रागुक्तान्योन्याश्रयप्रसङ्गेनादिपदोक्तेन तस्यैव वृत्तित्वे स्वज्ञाने स्वज्ञानापेक्षेत्यात्माश्रयप्रसङ्गेन चेत्यर्थः । तन्त्रमित्युपलक्षणम् । शक्तत्वमेवोक्तरूपस्मृतिहेतुत्वमिति सुवचत्वादित्यपि ध्येयम् ॥

का तर्हि वृत्तित्वनिरुक्तिर्निर्दोषा लक्षणादिसाधारणी । यद्वृत्तित्वमनु[3]भावकतायां तन्त्रं स्यादित्यत आह—**साक्षादिति । परंपरेति ।**

---

[1] तया–**रा. ग.** [2] क्तिरूपसं–**रा. सु. क.** [3] मेवानुभा–**ए.**

श्रयाभावात् । गङ्गाशब्दस्य च तीरे परंपराशक्ति-संबन्धस्य सत्त्वात् । साक्षात्वेन विशेषणे[1] गौरवात् । गङ्गापदात्स्मराम्येव घोषपदात्त्वनुभवाम्यपीत्यननुव्यवसायेन घोषान्विततीरानुभवार्थं गङ्गापदेप्यनुभावकत्वस्यावश्यकत्वाच्च ॥

अन्यथा गामानयेत्यत्रापि एकमनुभावकं न स्यात् । श्रुतमेवानुभावकं न त्वध्याहृतम् रूढमेवानुभावकं न तु यौगिकमिति च स्यात् ॥

अत एव लक्षणादिस्थलेपि शक्तेरेव परंपरयापि व्यापारादेवानुव्याख्याने लक्षणादिसाधारणतात्पर्य

---

शक्यार्थद्वारको वा लक्ष्यार्थद्वारको वा परंपरासंबन्धो ध्येयः । तथाच लक्षितलक्षणायां नाव्याप्तिः । **शक्तिसम्बन्धित्वं** । शक्तिरूपसम्बन्धवत्त्वमित्यर्थः । गङ्गायां घोष इत्यादावव्याप्तिरित्यत आह—**गङ्गेति** । लक्षितलक्षणायामपि न दोष इत्यपि ध्येयम् ॥

ननु — साक्षाच्छक्तिरूपसंबन्धवत्त्वमेवानुभावकतायां तन्त्रभूतं वृत्तित्वम् । एवं च लक्षणादेर्न तादृशवृत्तित्वप्रसङ्ग इत्यत आह—**साक्षात्वेनेति** । कुत एवं निर्बन्ध इत्यत आह—**गङ्गेति** । विपक्षे बाधकानि चाह -**अन्यथेति** । अनुव्यवसायाभावेपि स्मारकत्वमात्रकल्पन इत्यर्थः ॥

स्वोक्तनिरुक्तौ संवादमाह—**अत एवेति** । तस्यैव विवरण[2] लक्षणादिस्थल इत्यादि[3] । **अनुव्याख्यान इति** । ज्ञानपादीयानुव्याख्यान

---

[1] च गौ—**सु. क.**  [2] णमाह—लक्ष—**ए.**  [3] दिना -**ए**

निरुक्तौ वाचकत्वं हि तात्पर्यमित्युक्तम् । सुधायामपि लक्षणामधिकृत्यावश्यं शक्तिराश्रयणीयेत्युक्तम् ॥

केचित्तु—गङ्गापदस्याननुभावकत्वे व्युत्पत्तिसिद्धं घोषपदेन सह संभूय कारित्वं न स्यात् । अनुभवे गङ्गापदस्याव्यापारात् । स्मृतौ च पदानामन्यनैरपेक्ष्यादित्याहुः । तन्न । प्रोक्षणादीनां व्रीह्यादिद्वारा याग इव गङ्गापदस्यापि स्मृतिद्वारा गङ्गान्वितघोषानुभवे व्यापारेण संभूयकारित्वसंभवात् ॥

लाक्षणिका[1]देर[2]नुभावकत्वसमर्थनम् ॥ ६७ ॥



इत्यर्थः । **सुधायामपीति** । 'पूर्वायोगे परग्रह' इत्यानुमानिकपादीयानुव्याख्यानसुधायाम् । लक्षणाद्यमुख्यवृत्तिर्नोपेया सादृश्यसंबन्धयोस्तद्वितोत्पत्त्यैव सर्वनिर्वाहादर्थापत्तिरेव वा गङ्गायां घोष इत्यादावस्त्वित्याशङ्क्य तत्र दूषणानुक्त्वोपसंह्रियते अवश्यं शक्तिराश्रयणीयेति । तत्र लक्षणादिवृत्तिरवश्यमाश्रयणीयेत्युपसंहर्तव्ये शक्तिरित्युपसंहारोत्र प्रागुक्ताभिप्रायक एव । अन्यथासङ्गतः स्यादिति भावः । समाध्यन्तरं नादरणीयमिति भावेन तदनूद्य निराह—**केचित्त्विति** ॥

लाक्षणिका[1]देर[2]नुभावकत्वसमर्थनम् ॥ ६७ ॥



[1] कत्वादे -उ. [2] रानुभाविकत्व–ए.

## अथ लाक्षणिकादेः शक्यसम्बन्धित्वादिनैव लक्ष्याद्युपस्थापकत्वसमर्थनम् ॥ ६८॥

**यच्चोक्तं मणौ—गङ्गाशब्देन वस्तुगत्या यद्गङ्गासंबन्धि तीरं तदेव तीरत्वेनोपस्थाप्यते। न तु गङ्गासंबन्धित्वेन। युगपद्वृत्तिद्वयविरोधात्। गङ्गासंबन्धे गङ्गासंबन्धाभावाच्चेति। तन्न। गङ्गायां घोषो मत्स्यश्चेत्यादौ युगपद्वृत्तिद्वयदर्शनात्। छत्रिणो गच्छन्तीत्यत्र छत्रच्छत्रिसमुदायस्येवेहापि**

---

अथ लाक्षणिकादेः शक्यसम्बन्धित्वादिनैव लक्ष्याद्युपस्थापकत्वसमर्थनम् ॥ ६८ ॥

**यच्चोक्तमिति**। लक्षणावाद एव। लक्षणया तीरत्वेनो-[1]पस्थितौ तीरान्तरेऽन्वयोऽपि स्यात्। गङ्गातीरत्वेनोपस्थितौ युगपद्वृत्तिद्वयविरोधः। गङ्गोपस्थितेः शक्तिसाध्यत्वादित्याशङ्क्योक्त[2]मित्यर्थः। **गङ्गासंबन्धित्वेनेति**। गङ्गासंबन्धितीरत्वेनेत्यर्थः। **वृत्तिद्वयेति**। शक्त्या पूरस्य लक्षणया तीरस्य चोपस्थाप्यत्वादिति भावः—**गङ्गेति**। पूरे शक्तस्य गङ्गापदस्य पूरसंबन्धोपस्थापने तत्र शक्तेरभावेन पूरसंबन्धरूपशक्यसंबन्धद्वारकलक्षणावृत्तेरेव वाच्यत्वात्पूरसंबन्धे च पूरसंबन्धाभावाच्च न तदुपस्थापकमित्यर्थः॥

[3]तन्त्रावृत्तिं मन्वानं प्रत्याह—**छत्रिण इति**। उक्तं च पक्षधरेपि। न च वृत्तिद्वयविरोधः गङ्गाया अपि लक्षणयैवोपस्थितेरित्यादि।

---

[1] त्वोप—**उ.**   [2] क्तं नि—**उ.**   [3] तन्त्रावृ—**उ. ए.** तत्र वृ—**नं.**

गङ्गासंबन्धितीरस्य लक्षणयैवोपस्थितेश्च। गङ्गायास्तीरेण सह संयोगस्यैव संयोगरूपेण स्वसंबन्धेन सह[1] समवायरूपसंबन्धस्य सत्त्वाच्च ॥

ननु—यथा पदहस्तिनोर्ज्ञानात्पदार्थहस्तिपयोः स्मृतिर्न पदहस्तिविषया। तथा गङ्गा[2]ज्ञानात्तीरस्मृतिर्न स्मारकगङ्गा[3]विषयेति कथं तत्संबन्धविषयेति चेन्न। पदं न स्मारकमित्युक्तत्वात्। अनुभवश्च न तीरत्वेनैव। किंतु गङ्गासंबन्धितीरत्वेन। अन्यथा वक्त्रभिप्रेतस्य पावित्र्यादेरसिद्धेः। श्रोतुश्च गङ्गातीर एव प्रवृत्त्याद्यनुपपत्तेश्च ॥

न च लक्षणास्थले गङ्गासंबन्धस्य सन्निकर्षत्वाच्चक्षुर्घटसंयोगवद्वृत्तित्वाच्च शक्तिवन्न तज्जन्यधीविषयत्वमिति वाच्यम्। रूपी घट इत्यत्र सन्निकर्षकोटेरपि समवायस्य गौणी[4]स्थले वृत्ते-

---

गङ्गासंबन्धे गङ्गासंबन्धाभावाच्चेत्युक्तदोषं निराह—**गङ्गाया इति**। मण्युक्तमेवाशङ्कते—**नन्विति**। गङ्गासंबन्धित्वेनोपस्थितिर्नेत्यत्रानुभवविरोधश्चेति भावेनाह—**अनुभवश्चेति**। अन्यथेत्येतच्छ्रोतुश्चेत्यत्राप्यन्वेति। प्रकारान्तरेण गङ्गासंबन्धित्वेनानुपस्थितिमाशङ्क्य निराह—**न च लक्षणास्थल इति**। सन्निक[5]र्षत्वाद्वृत्तित्वाच्चेत्युक्तहेतुद्वयस्य क्रमेण व्यभिचारमाह—**सन्निकर्षकोटेरिति**। **समवायस्येति**।

---

1 संयोगस्यैव संयोगरूपेण स्वसंबन्धेन सह–**रा.** 2 ज्ञापदात्ती–**सु. क.** 3 पदादिवि–**क.** 4 णस्य–**रा. सु. क. ग.** 5 र्षाद्य–**नं. उ.**

रपि सादृश्यस्य च तज्जन्यधीविषयत्वदर्शनात् । लक्षणायां [1]चाशक्यत्वेन सजातीयगौणीरीतिरेव युक्ता । न तु विजातीयाभिधारीतिः ॥

किंच संबन्धो न वृत्तिः । किंतु तद्धेतुरेव । घटत्वादिरपि घटादिशब्दवृत्तौ हेतुः ॥

एतेन शक्तिस्थले वृत्तिविषयतावच्छेदकस्य घटत्वादेरेव घटादिशब्दजन्यधीविषयत्वदर्शनादत्रापि गङ्गासंबन्धस्य शाब्दधीविषयत्वे वृत्तिविषयतावच्छेदकत्वं वाच्यम् । तच्चायुक्तम् । इह गङ्गासंबन्धस्यैव वृत्तित्वेन स्वस्य स्वविषयतावच्छेदकत्वायोगादिति निरस्तम् । संबन्धो न वृत्तिरित्युक्तत्वात् ॥

---

अन्यथा रूपीति विशिष्टज्ञानं न स्यात् । संबन्धाविषयकत्वात् । न चैकदेशस्य [2]भानेपि सन्निकर्षतापर्याप्त्यधिकरणस्य न तज्जन्यधीविषयत्वमिति वाच्यम् । हेत्वभावेनाप्रयोजकत्वात् । **वृत्तेरपि** । वृत्तिरूपस्यापीत्यर्थः । **सादृश्यस्य चेति**[3] । न केवलं समवायस्येति चार्थः । शक्तौ नोपलब्धेयं रीतिरित्यत आह—**लक्षणायां चेति** । वृत्तित्वादिति हेतोरसिद्धिरिति भावेनाह—**किंचेति** । एतच्च प्रागेव वृत्तिलक्षणोक्तिप्रस्तावे व्यक्तम् । वृत्तिहेतोः शाब्दधीविषयत्वं क्वोपलब्धमित्यतो घटत्वादावुपलब्धमिति[4] भावेनाह—**घटत्वादिरपीति** । **एतेनेति** । अवृत्तित्वकथनेनेत्यर्थः । **उक्तत्वादिति** । वृत्तिलक्षणोक्तिप्रस्तावे किंचेत्यादिपूर्वग्रन्थे चेत्यर्थः ॥

---

[1] वा मुख्यत्वेन—**रा. ग.** चामुख्यत्वेन—**सु. क.** [2] भावेपि—**न. उ. ए.** [3] पदस्य चेति । न के—**उ.** [4] "वृत्तिरर्थप्रतिपादकामिति—" इत्यधिकम्—**ए.**

आकाशशब्दशक्तिविषयता[1]नवच्छेदकस्या[2]पि शब्दसमवायित्वस्येवेहापि वृत्तिविषयतानवच्छेदकस्यापि गङ्गासंबन्धस्य शाब्दधीविषयत्वोपपत्तेश्च ॥

किंच घटत्वादेर्घटादिपदजन्यज्ञाने प्रकारत्वानुभवाद्धि घटादिपदशक्तिविषयतावच्छेदकता कल्प्यते। कल्पकान्तराभावात्। इहापि गङ्गापदजन्यज्ञाने गङ्गासंबन्धित्वस्य प्रकारत्वं किं नानुभवसि। येन तस्य गङ्गापदवृत्तिविषयतावच्छेदकतां न कल्पयसि। तथात्वे तीरं गाङ्गमन्यद्वेति कदाचित्संदेहादि स्यात् ॥

न च स्वस्य स्वविषयतावच्छेदकत्वायोगः। तीरगतायाः पदनिष्ठवृत्तिविषयताया अवच्छेद्यत्वात्। तीरगतस्य गङ्गासंयोगस्य चावच्छेदकत्वात् ॥

---

ननु—न्यायमते आकाशशब्दस्याकाशे शक्तेरेवाभावेन वा ततोऽन्यस्याकाशरूपधर्मस्याभावेन वास्तवगत्यात्र भानमिह तु नैवमित्यतोऽवच्छेदकत्वमेव सोपपत्तिकमाह—**किंचेति**। **तथात्व इति**। तीरस्य गङ्गासंबन्धित्वेनाननुभवे सतीत्यर्थः। स्वस्य स्वविषयतावच्छेदकत्वायोगादिति प्रागुक्तं निराह—**न चेति**। एवं संबन्धस्याभ्युपेत्यावच्छेदकत्वं शाब्द-

---

[1] ताव—**रा. ग.** [2] स्य शब्दसमवा—**सु. क.** स्यापि शब्द—**ग.**

मास्तु वावच्छेदकत्वम् । तथापि तीरधी-रूपफलबलेन लक्षणावद्गङ्गासंबन्धधीरूपफलबलेन गङ्गाशब्दतीरयोः संबन्धघटकसंबन्धत्वस्यैव लाक्षणिकशब्दजन्यधीविषयत्वे तन्त्रत्वं कल्प्यताम् ॥

यद्वा क्षीरमाधुर्ये क्षीरसंबन्धमनन्तर्भाव्यैव माधुर्यावान्तरविशेष इव गङ्गातीरेपि गङ्गासंबन्ध-मनन्तर्भाव्यैव गङ्गासंबन्धव्याप्य[1]संस्थानाविशेषो वातिपूततीरत्वादिर्वा तीरान्तरव्यावृत्तोऽसाधारण-धर्मो येनयेन पुंसा [2]प्रयोगेऽनुभूस्तस्यतस्य सस वृत्तितज्जन्यज्ञानयोर्विषयतावच्छेदक इति न कोपि दोषः ॥

धीविषयत्वमुपपादितमिदानीमवच्छेदकत्वाभावेप्यन्यदेव शाब्दधीविषयत्वनियामकमस्त्वित्याह—**मास्त्वित्यादिना** । गङ्गाशब्दात्तीरधीरूपफलबलेन गङ्गाशब्दे लक्षणावृत्तिकल्पनवदित्यर्थः । **गङ्गासंबन्धधीरूपेति** । तद्धियः प्रागेवोपपादितत्वादिति भावः । **संबन्धेति** । गङ्गाशब्दतीरयोः परंपरारूपो हि संबन्धः शब्दस्य पूरेण शक्तिरूपः पूरस्य तीरेण संयोगः । तत्र गङ्गातीरयोः संयोगस्तदेकदेशभूतत्वात्तद्घटको भवतीति गङ्गाशब्दतीरयोः संबन्धघटकसंबन्धत्वस्यैवेत्युक्तम् । ननु संबन्धस्यानवच्छेदकत्वादन्यस्यावच्छेदकस्याभावात्कथं वृत्तिविषयताग्रह इत्यत आह—**यद्वेति** । **न कोपीति** । तीरान्तरेन्वयप्रसङ्गदोषो वा अवच्छेदकाभावदोषो वा, संबन्धस्यावच्छेदकत्वकल्पनादोषो वा नास्तीत्यर्थः

[1] व्यः सं—**रा. सु. ग.** [2] यो योनुभूतस्त—**रा. सु. क. ग.**

यद्वा लक्षकपदेन योयोर्थो भासते तावत्पर्यन्तः परंपरासंबन्धो लक्षणावृत्तिः। अत एव लक्षितलक्षणापि लक्षणैव। एवं च रूपसमवायी घट इत्यत्र यथा घटरूपसमवायैः सह संयोग[1]समवायस्वरूपाणि सन्निकर्षास्तथा तीरेण सह प्रवाहसंबन्धः संबन्धेन सह संबन्धसंबन्धो वृत्तिः। तद्विषयता च तीरे तीरत्वेनेव संबन्धे संबन्धत्वेनावच्छिद्यते॥

न चानवस्था। तीरसंबन्धस्येव संबन्धसंबन्धस्याप्रती[2]त्या तस्य स्वरूपसत एव वृत्तित्वात्।

---

ननु—वृत्त्यविषयस्य सम्बन्धस्य संस्थानविशेषादेर्वा कथं शाब्दधीविषयतेत्यतो वृत्तिविषयत्वमपि तस्य तदनुगुणं लक्षणावृत्तिलक्षणोक्तिपूर्वमाह—**यद्वेति। अत एवेति।** प्रतीतिपर्यन्तपरंपरासंबन्धस्य लक्षणावृत्तित्वादेवेत्यर्थः। प्राग्विरुद्धा राजान इदानीमेकीभूता इत्यादिर्लक्षितलक्षणा। अन्यथा सा पृथग्वृत्तिः स्यादिति भावः॥

अस्त्वेवं तावता गङ्गासंबन्धस्य कथं वृत्तिविषयतेत्यत आह—**एवं चेति। संयोगेति।** यथाक्रमं घटेन संयोगो रूपेण समवायः, समवायेन विशेषणतादिरूपस्वरूपसंबन्ध इत्यर्थः। **सन्निकर्षा इति।** चक्षुरादेरिति योज्यम्। तथेत्यनन्तरं शब्दस्येति शेषः। **प्रवाहसंबन्ध इति।** वृत्तिरित्यन्वयः। **सम्बन्धेनेति।** संयोगादिरूपप्रवाहतीरादिसंबन्धेन सह संबन्धसंबन्धः संयोगादिनिरूपितसमवायादिरित्यर्थः। **न चानवस्थेति।**

---

[1] संयुक्तत्याधिकम्—सु. गः संयुक्तसमवाय· संयुक्तसमवेतविशेषणतासान्निक— क. [2] तीतस्य—सु.

नहि रूपसमवायी[1] घट इत्यत्र समवायस्वरूपसबन्धोपि सबन्धान्तरेण संबद्धो भासते[2] ॥

तस्माद्वृत्तिद्वयविरोधः, संबन्धे संबन्धान्तराभावः, स्मारकस्य स्मार्यकोट्यप्रवेशनियमः, वृत्तेर्वृत्तिजन्यज्ञानाविषयत्वानियमः, वृत्तेरेव वृत्तिविषयत्वावच्छेदकत्वासंभव, इति बाधकपञ्चकस्योद्धृतत्वाद्गङ्गाशब्दो गङ्गातीरत्वेनैव ती[3]रार्थोपस्थापक इत्यस्य पञ्चधोपपादितत्वाच्च[4] न कश्चिद्दोषः ॥

अत एव—

"स्वातन्त्र्ये च विशिष्टत्वे स्थानमत्यैक्ययोरपि ।
सादृश्ये चैकवाक् सम्यक् सावकाशा यथेष्टतः"॥

इत्यनुव्याख्याने लक्षणानिमित्तस्य स्वातन्त्र्यादेः संबन्धस्य गौणीनिमित्तस्य सादृशस्य चाभेदश्रुत्यर्थतोक्ता ॥

एतेनाखण्डे ब्रह्मणि वेदान्तानां लक्षणेत्यद्वैति-

संबन्धसंबन्धेनापि शब्दस्य संबन्धसंबन्धसंबन्धो वृत्तिरिति वाच्यम् । तत्राप्येवमित्यनवस्थेत्यर्थः । **न कश्चिद्दोष इति** । अतिप्रसङ्गादिति वृत्त्यविषयस्य कथं भानमिति दोषश्च नेत्यर्थः । पूर्वोक्तवृत्तिहेतोः शाब्दधीविषयत्वे ज्ञापकमाह—**अत एवेति** ॥

ननु वेदानां गुणान्विते भगवति शक्तिरित्युपपादनप्रस्तावे लक्षणादिवृत्तेर्लक्षणाद्युक्तेरुपयोगाप्रतीतेराह—**एतेनेति** । उक्तं चेक्षतिनये—

[1] यीत्यत्र समवायः स्वरूपसंबन्धेनेव स्वरूपसं–**रा. सु. क. ग.** [2] इति इत्यधिकम्–**रा.** इति न कश्चिद्दोषः इत्यधिकम्–**सु.** [3] रोपस्था–**रा.क.** [4] तस्मादित्यारभ्य नास्ति–**रा** इति इत्यधिकम् -**सु. क. ग.**

मतं निरस्तम् । लक्षकस्य शक्यसंबन्धित्वेनैवोप-
स्थापकत्वात् ॥

लाक्षणिकादेः शक्यसंबन्धित्वादिनैव लक्ष्याद्यु-
पस्थापकत्वसमर्थनम् ॥ ६८ ॥



## अथ स्वमते गौण्या लक्षणातो भेदप्रकारः ॥ ६९ ॥

अथ परशब्दस्य परत्र वृत्तित्वाविशेषात्कथं गौणी लक्षणातो भिन्ना । सादृश्यस्यापि सबन्धत्वात् । न हि संयोगादिरेव संबन्धो लक्षणा-

---

"अमेयं चेन्न शास्त्रस्य तत्र वृत्तिः कथंचन" ।
इत्येतद्व्याख्यावसरे सुधायां न हि तीरं स्वरूपतो गङ्गासंबन्धित्वेन च प्रमाणतोऽप्रतिपन्नो गङ्गाशब्देन तज्ज्ञाप्यत इत्यादीति भावः ॥

लाक्षणिकादेः शक्यसंबन्धित्वादिनैव लक्ष्याद्युपस्थापकत्वसमर्थनम् ॥ ६८ ॥



अथ स्वमते गौण्या लक्षणातो भेदप्रकारः ॥ ६९ ॥

यत्तु सुधायां कश्चिदाह—गौणी नाम वृत्तिर्नास्तीत्यादिना लक्षणागौण्योरभेदमाशङ्क्य भेदसमर्थनं कृतं तद्विवृण्वानः प्रागुक्तामुख्यवृत्तिभेदं तावदाक्षिपति—**अथेति** । **परशब्दस्येति** । अन्यवाचकस्येत्यर्थः । संबन्धसादृश्यरूपनिमित्तभेदाद्भेद इत्यत आह—**सादृश्यस्यापीति** । संयोगसमवायादिरूपत्वाभावात्कथं संबन्धत्वमित्यत आह—**न हीति** । गङ्गायां घोष इत्यत्र संयोगः, यत्र गुणा-

बीजम्। किं तु विशिष्टधीनिर्वाहकं संबन्धमात्रम्। अस्ति चेहापीदमनेन सदृशमिति विशिष्टधीरिति-चेन्मैवम्॥

यथाहीदमनेन संयुक्तमिति प्रतीत्या संयोगो विशेषणविशेष्ययोः संबन्धतया न सिध्यति, दण्डी-त्यत्र दण्डस्येवेह संयोगस्यैव विशेषणत्वात्, किंतु संयोगस्य संयोगिना सह समवाय एव सिध्यति, तथोक्तप्रतीत्या सादृश्यस्य धर्म्यादिना सहान्यः संबन्धः सिध्यतु। सादृश्यस्य संबन्धत्वे किमायातम्॥

न हि तन्निरूप्यत्वमेव तत्संबन्धत्वम्। दैर्घ्या-देरपि ह्रस्वादिसंबन्धत्वापातात्। किं तु त[1]न्नि-रूप्यत्वव्याप्यं तत्॥

---

दिना गुण्यादिर्लक्ष्यते तत्र समवायः, विषयादिना विषयादिर्लक्ष्यते तत्र स्वरूपसंबन्ध इत्यननुगमापत्तेरिति भावः। **यथेति**। तथेत्यने-नान्वयः। **विशेषणविशेष्ययोरिति**। संयोगसंयोगिनोरित्यर्थः। **सिध्यतीति**। संबन्धतयेत्यनुषङ्गः। **उक्तप्रतीत्येति**। इदमनेन सदृशमिति प्रतीत्येत्यर्थः॥

ननु——सादृश्यस्येदमनेनेत्युभयनिरूप्यत्वादुभयसंबन्धत्वमित्यत आह——**न हीति**। किंनाम संबन्धत्वमिति प्रश्नोत्तरमाह—**निरूप्यत्व-व्याप्यमिति**॥

---

1 तत्संबन्धवत्त्वव्याप्य—क.

**यदि तु संबन्धान्तरं विना संयोगादिनैव चैत्रो दण्डी रूपी ज्ञातश्चेति धीवत्सादृश्येनैव सिंहवान्देवदत्त इति धीः स्यात् तदा सादृश्यस्य संबन्धत्वं सिध्येदपि । सा तु नास्ति ॥**

**ननु—सादृश्यमात्रं निमित्तं चेदतिप्रसङ्गः । स्वसंबन्धि चेदावश्यकत्वात्संबन्ध एव निमित्तमस्त्विति चेन्न । संबन्धे स्वसंबन्धित्वस्यैव**

---

ननु—सादृश्यस्य संबन्धत्वेन धीप्रकारः इदमनेन सदृशमित्युक्तरूपे प्रतीत्याकारव्यतिरेकेण नोपदर्शयितुं शक्य इतीयमेव संबन्धत्वप्रतीतिरित्यत आह—**यदि त्विति । संयोगादिनैवेति ।** संयोगसमवायस्वरूपसंबन्धैर्यथाक्रमं दण्डीचैत्रः रूपीघटः ज्ञातो घटः इति धीवदित्यर्थः । सिध्येदपीत्यनास्थोक्तिः । तत्रापि गोमानित्यादिवत् संबन्धान्तरस्यापि संभवादिति भावः । अस्तु तथैव धिया संबन्धत्वसिद्धिरित्यत आह—**सा त्विति ।** तथाच न संबन्धत्वं सादृश्यस्येतिभिन्ननिमित्तत्वाल्लक्षणागौण्योर्भेद इति भावः ॥

प्रकारान्तरेण गौण्या अपि संबन्धनिमित्तकत्वमाशङ्कते—**नन्विति । अतिप्रसङ्ग इति ।** यत्किंचित्सादृश्यस्य सर्वत्र संभावत्सर्वस्य शब्दस्य गौण्या सर्वार्थप्रत्यायकत्वप्रसङ्ग इत्यर्थः—**स्वसंबन्धीति ।** गौणशब्दवाच्यार्थसंबन्धिभूतं सादृश्यं निमित्तमित्यर्थः[1] । **संबन्ध[2] एवेति ।** तथाचैकनिमित्तकत्वान्न लक्षणागौण्योर्भेद इति भावः ।

---

[1] 'स्वसंबन्धीति' इत्यारभ्य नास्ति—उ. ए. [2] न्धत्व-ए उ.

**साहश्येपि स्वसंबन्धित्वस्या पेक्षायामपि मुख्यार्थ-संबन्धस्यानेन हेतुत्वासिद्धेः । अपि चेमौ सदृशावेव न तु संबद्धाविति[1] धीर्न स्यात् ॥**

**किंचेमौ संबद्धौ सदृशौ चेति प्रतीत्योर्विषयकृतवैलक्षण्यं सर्वसाक्षिकम् । किंचैवं यदि सादृश्यं संबन्धविशेषस्तर्हि संबन्धोऽपि एकदेशस्थ-**

---

**सादृश्येति** । प्रसङ्गभङ्गकृतयोपात्तो[2] मुख्यार्थसंबन्धो न वृत्तौ निमित्तं भवितुमर्हति । किंतु सादृश्यमेवातो भिन्ननिमित्तकत्वाल्लक्षणागौण्योर्भेद इति भावेन सदृष्टान्तमाह —**संबन्धे संबन्धित्वस्येवेति** । यथा लक्षणावृत्तौ न संबन्धमात्रं निमित्तम् अतिप्रसङ्गात् किंतु मुख्यार्थसंबन्धिसंबन्धित्वम् तथापि तत्र मुख्यार्थसंबन्धित्वं संबन्धे विद्यमानं लक्षणावृत्तौ न निमित्तं तथेत्यर्थः । **अनेनेति** । अतिप्रसङ्गभङ्गनार्थमुपात्तेन मुख्यार्थसंबन्धित्वरूपसादृश्यविशेषणेनेत्यर्थः । सादृश्यस्य संबन्धत्वे बाधकं चाह—**अपिचेति** ॥

ननु—संबद्धाविति धीः संयोगादिरूपसंबन्धविशेषाभावविषया । न तु संबन्धसामान्याभावविषया । येन सादृश्यं न संबन्धः स्यादिति चेन्न । सामान्यविशेषविषयत्वकल्पकाभावात् । सादृश्यस्य संबन्धत्वधीरेव कल्पिकेति चेन्न । तदभावस्योक्तत्वात् । प्रत्युतासंबन्धत्वधीरेवानुभवसिद्धेत्याह—**किं चेति** । सुधोक्तं बाधकं चाह—**किंचैवमिति** । तस्यैवार्थः सादृश्यमित्यादि—**एकदेशेति** । संबद्धौ [3]ह्येकदेशे वर्तेते इति

---

[1] त्यादि–**सु. क.**　[2] त्तो अमु–**उ** त्तत्समु–**ए.**　[3] न्धोह्येकदेशे वर्तते-**नं. ए.**

[1]त्वात्सादृश्यविशेषः किं न स्यात्। नैवं लौकिकी-
धीरिति चेत्समं प्रकृतेति ॥

तदुक्तं सुधायाम्—तत्किं सादृश्यं संबन्धत्वेन प्रतियन्ति लौकिका इति ॥

तस्माद्यत्र मुख्यार्थसंबन्धो निमित्तं सा लक्षणा। यत्र तु सादृश्यं निमित्तं सा गौणीति ॥

[2]स्वमते गौण्या लक्षणातो भेदप्रकारः ॥ ६९ ॥

एकप्रदेशविशेषे वर्तमानत्वं द्वयोः संबद्धयोरन्यतरस्येवान्यतरस्याप्यस्तीति[3] संबन्धोपि सादृश्यविशेषः स्यात् । तथाच गौणीवृत्तिरेवास्ति न लक्षणेति वैपरीत्यमपि स्यादिति भावः। **प्रकृतेपीति** । सादृश्यस्यापि संबन्धत्वधीर्लौकिकी नास्तीत्यर्थः । **तदुक्तमिति** । आनुमानिकपादे वृत्तिलक्षणोक्तिप्रस्तावे । तत्किमिति काकुः। प्रतियन्ति जानन्तीत्यर्थः । न प्रतियन्तीति यावत् ॥

अनुव्याख्यानोक्तादिशा निमित्तभेदेनोपपादितं वृत्तिभेदमुपसंहरति—**तस्मादिति** ॥

स्वमते गौण्या लक्षणातो भेदप्रकारः ॥ ६९ ॥

[1] त्वादिसादृश्य—**सु.** स्थानादिसादृश्य—**क.** [2] अत्र प्रकरणविभागोनास्ति—**रा. सु. ग.** [3] ति सादृश्यमपि संबन्धविशेषःस्यात्—**उ. ए.** श्यमपिसंबन्धविषयः स्या—**नं.**

## अथ परोक्तस्य गौण्या लक्षणातो भेदस्य भङ्गः ॥७

अन्येतु सिंहनिष्ठशौर्यादिगुणा लक्ष्यमाणाः सिंहशब्दस्य माणवके वृत्तौ निमित्तमित्याहुः। तन्न। व्यधिकरणानां[1] गुणानां माणके वृत्तौ निमित्तत्वायोगात्। लक्ष्यमाणगुणसादृश्या द्गुणान्तरं ततो गुणी लक्ष्यत इति गौणी लक्षितलक्षणैवेति[2] तु नानुभवानुसारि। किंचावश्यकत्वाल्लाघवाच्च सिंहेन सह माणवके यत्सादृश्यं तदेव निमित्तं युक्तम् ॥

### अथ परोक्तस्य गौण्या लक्षणातो भेदस्य भङ्गः ॥ ७० ॥

परोक्तभेदप्रकारमनूद्य सुधोक्तदिशा निराह—**अन्येत्वित्यादिना। लक्ष्यमाणेति**। सिंहो माणवक इत्यादौ।

लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टातु गौणता।

इति काव्यप्रकाशिकाद्युक्तदिशा सिंहशब्देन लक्ष्यमाणसिंहनिष्ठगुणानां माणवके सिंहशब्दवृत्तौ निमित्तत्वं न युज्यते। अन्यनिष्ठगुणानामन्यत्र शब्दवृत्तौ निमित्तत्वेऽतिप्रङ्गात्। [3]सिंहनिष्ठगुणसदृशाः क्रौर्यादयो माणवकनिष्ठा लक्षणीयाः। तैश्च गुणी माणवको लक्ष्यत इति लक्षितलक्षणैव। न तु शुद्धलक्षणेति। लक्षणागौण्योरयमेव भेद इत्यर्थः। अनुभवे विवादिनं प्रत्याह—**किंचेति। आवश्यकत्वादिति**। गुणान्तरलक्षणार्थं मुख्यार्थनिष्ठगुणसादृश्यस्य त्वयाप्युक्तत्वादिति भावः ॥

[1] सिंहनिष्ठेत्यधिकम्–**सु. क. ग.** [2] तन्ना–**रा. ग.** [3] एवं चेत्यधिकम्–**उ. नं. प.**

केचित्तु सादृश्यस्य संबन्धविशेषत्वेपि यत्र संबन्धत्वेन हेतुता सा लक्षणा, यत्र तु सादृश्यत्वेन हेतुता सा गौणीत्याहुः। तन्न। सादृश्यं संबन्धविशेषो नेत्युक्तत्वेन क्लिष्टकल्पनायोगात्। यत्र संयोगत्वादिना हेतुता तस्या वृत्त्यन्तरत्वापाताच्च॥

इतरे तु यत्रोपस्थापकस्यापि वाक्यार्थेऽन्वयः सा गौणी। तत्र सादृश्यस्यापि प्रतीतेः। [1]यत्र तु न तस्य वाक्यार्थेन्वयः सा लक्षणा। तत्र संबन्धस्याप्रतीते रित्याहुः। तन्न[2]। लक्षणायामपि संबन्धप्रतीतेरुक्तत्वात्॥

अन्ये तु यत्र धर्मे तात्पर्यं सा गौणी। सिंहो देवदत्त इत्यत्र धर्मिणो देवदत्तपदेनैवोक्तेः। यत्र तु धर्मिमात्रे तात्पर्यं सा लक्षणा। तत्र तीरस्य

---

लक्षणागौण्योः प्रकारान्तरेण भेदमनूद्य निराह—**केचित्त्वित्यादिना**। हेतुतावच्छेदकभेदाद्भेदेऽतिप्रसङ्गमाह—**यत्र संयोगत्वादिनेति**। **उपस्थापकस्यापीति**। सादृश्यसंबन्धयोरमुख्यरूपार्थान्तरोपस्थापकयोः शाब्दबोधे भानाभाननिमित्तवाक्यार्थान्वयानन्वयाभ्यां गौणलक्षणयोर्भेदमाहुरित्यर्थः। **उक्तत्वादिति**। शक्यसंबन्धित्वेनैव लक्ष्याद्यर्थकत्वसमर्थनवादे उक्तत्वादित्यर्थः। लक्षणावृत्तिलक्षणं गौण्यामप्य-

[1] त्र. सादृश्यस्य न वा—क त्रतु तस्य न वाक्या—ग. [2] सिंहनिष्ठ क्रौर्यादिगुणा लक्ष्यमाणा सिंहशब्दस्य माणवके वृत्तौ निमित्तमित्याहुः। तन्न। इत्यधिकम् ततः " व्यधिकरणानामपि संबम्—रा. ग.

पदान्तरेणानुक्तेरित्याहुः । तन्न । सिंहमानयेति गौण्यामपि धर्मिवाचिपदाभावात् ॥

अपरे तु सामानाधिकरण्ये गौणी, वैयधिकरण्ये लक्षणेत्याहुः । तन्न । अग्नेरध्यनं गङ्गा घोषवतीत्यपि दर्शनात् ॥

[1] परोक्तस्य गौण्या[2] लक्षणातो भेदस्य भङ्गः ॥ ७० ॥

## अथ रूढ्यादिवृत्तित्रयस्य बलाबलनिर्णयः ॥ ७१ ॥

[3] अत्र मुख्यवृत्तित्रये पङ्कजादिशब्देषु

---

स्तीत्याह—**सिंहमानयेति** । सिंहसदृशमाणवकमानयेत्यर्थके वाक्य इत्यर्थः । **सामानाधिकरण्य इति** । पदस्य पदान्तरेण सामानाधिकरण्ये सतीत्यर्थः । एवमग्रेपि । सिंहश्चैत्र इत्यादावेकविभक्तित्वेन सामानाधिकरण्यं, गङ्गायां घोष इत्यादौ भिन्नविभक्तिकत्वेन वैयधिकरण्यमिति भावः । माणवकस्याध्ययनमितिवाक्ये माणवके पाविञ्यादिसूचनायाग्निसादृश्यं वक्तुमग्नेरध्ययनमित्यादिवाक्यप्रयोगदर्शनादित्यर्थः ॥

परोक्तस्य गौण्या लक्षणातो भेदस्य भङ्गः ॥ ७० ॥

## अथ रूढ्यादिवृत्तित्रयस्य बलाबलनिर्णयः ॥ ७१ ॥

एवमस्य शब्दस्य वृत्तिस्त्रेधेत्यादिना प्रकरणदशकेन विभागलक्षणपरीक्षाभिर्वृत्तिस्वरूपाणि निर्धार्येदानीं बलाबलं निरूपयितुं मुख्यवृत्तीनां तावत्तदाह—**अत्रेति** । प्राङ्निरूपितमुख्यामुख्यवृत्तिमध्ये

---

[1] अत्र " गौण्यालक्षणातो भेदोक्ति " इति नाम लिखितमस्ति—रा. ग. तस्मात्परोक्तपक्षषट्कमप्ययुक्तम्-इत्यधिकं च—सु. क. [2] गौण्या इत्यधिकम्—क. [3] तत्र—सु. क.

रूढेर्योगाच्च योगरूढिः प्रबला। रूढार्थस्य पद्मशब्देनापि, यौगिकार्थस्य च कर्दमजातशब्देनापि, प्रतीतिसंभवेनाप्रयुक्तानामवयवानां समुदायस्य च सार्थक्यायोभयानुग्रहस्यौचित्यात् ॥

अत एव लोके निरुपपदेन पङ्कजशब्देनोत्सर्गतो जलकमलस्यैव धीः। न तु स्थलकमलस्य। [1]न वा कुमुदस्य। एवं वेदेपि ब्रह्मादिशब्दैर्न रूढिमात्राज्जीवादेर्धीः। नारायणादिशब्दैरपि न योगमात्रादवयनवस्तुमात्रस्य ॥

---

यन्मुख्यवृत्तित्रयं तस्मिन्नित्यर्थः। पङ्कजमानयेत्यादौ रूढितः स्थलकमल[2]स्य योगात्कुमुदादेर्योगरूढितो जलकमलस्य ग्रहणप्रसक्तौ कस्य ग्रहणमित्यत आह—**रूढेर्योगाच्चेति**। प्राबल्ये हेतुमाह—**रूढार्थस्येति**। **वेदेपीति**। "तद्विजिज्ञासस्व, तद्ब्रह्म" इत्यादौ श्रुतब्रह्मशब्दादेः "अथ कस्मादुच्यते ब्रह्मेति। बृहन्तो ह्यस्मिन्गुणाः" इत्यादिश्रुत्या, "तदेव ब्रह्म परमं" [3]इत्यादिश्रुत्या च योगरूढैर्ब्रह्मादिशब्दैरित्यर्थः। व्यक्तमेतज्जन्माधिकरणचन्द्रिकायाम् ॥

आदिपदे "नात्मा वारे द्रष्टव्यः" इत्यादावात्मादिशब्दग्रहः। तथान्तराकाशप्राणाद्यधिकरणोदा[4]हरणभूतेन्द्रामित्राग्न्याकाशप्राणादिशब्दानां च ग्रहः। तेषामपि देवादौ रूढि[5]मात्राद्विष्णौ योगरूढिमत्त्वात्। रूढितो योगरूढः प्राबल्ये उदाहरणमुक्त्वा योगात्तत्प्राबल्ये आह—**नारायणेति** ॥

---

1 'न वा कुमुदस्य' इति नास्ति—**ग.** 2 स्यायो—**नं. ग.** 3 कवीनां इत्यधिकम्—**नं. ङ.** 4 दाहृतभू—**ङ.** 5 ढमा—**नं. ङ.**

**रूढियोगयोस्तु योगाद्रूढिः प्रबलेति तया योगस्यापहारः। यथा वर्षासु रथकारोऽग्नीनादधीतेत्यत्र रथकारशब्दे संकरजातौ रूढ्या रथकर्तरि योगस्य। यथा वा मण्डपं पश्येत्यत्र गृहविशेषे रूढ्या मण्डपानकर्तरि योगस्य ॥**

---

आपो नारा इति प्रोक्ता आपो वै नरसूनवः।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः ॥

इति स्मृत्या "विष्णुर्नारायणः कृष्ण" इत्यभिधानेन[1]च विष्णौ योगरूढेर्नारायणादिशब्दैः "नारायणं महाज्ञेयं" इत्यादौ जलाश्रयमात्रवस्तुनो न प्रतीतिः किंतु विष्णोरेवेत्यर्थः। एवं रूढेर्योगाच्च योगरूढेर्बलवत्त्वमुपपाद्य योगाद्रूढेस्तदाह—**रूढियोगयोस्त्विति**। **वर्षासु**—वर्षर्तौ। शब्दस्वाभाव्यात् स्त्रीलिङ्गं बहुवचनं च। **संकरजाताविति**—

शूद्रायां करभो वैश्यान्महिष्यो विट्स्त्रियां नृपात्।
रथकारस्तु माहिष्यात्करभ्यां यस्य संभवः ॥

इत्युक्तसंकरजातावित्यर्थः। **योगस्येति**। अपहार इत्यनुषङ्गः। एवमग्रेपि। अत एव षष्ठे वचनाद्रथकारस्याधानमित्याद्यपादीयोपान्त्याधिकरणे रथकर्तृत्वयोगेन त्रैवर्णिकपरत्वं रथकारशब्दस्याशङ्क्य रूढ्या संकरजातिपरत्वमुक्तमिति भावः। **मण्डपानेति**। मण्डं घनीभूतदधिखण्डविशेषं पिबतीति व्युत्पत्तेरिति भावः ॥

[1] न योगरूढनारायणशब्दैः—**उ. नं.**

ननु—

प्राबल्यं न तावत्समुदायात्परया विभक्त्या स्वार्थस्य कर्मत्वादेः समुदायार्थे बोधनादवयवार्थे त्वबोधनादिति युक्तम् । यौगिकार्थे प्रकरणादिसत्त्वेपि तया तत्र तदबोधनप्रसङ्गात् । रूढावखण्डनसमुदायादिव योगेपि सखण्डसमुदायात्परत्वस्य सत्त्वाच्च ॥

अन्यथा पाचकमानय पङ्कजमानयेत्यादौ कर्मत्वादेर्यौगिकार्थान्वयो न स्यात् ॥

---

योगाद्रूढेः प्राबल्यमुपजीव्यत्वादिनेत्युपपादयिष्यन् प्रकारान्तरेण प्रसक्तप्राबल्ये[1] हेतुचतुष्टयं पूर्वपक्षिमुखेनानूद्य निराचष्टे---**नन्वित्यादिना** उच्यत इति पर्यन्तेन । **यौगिकार्थेति** । यौगिकार्थग्राहकप्रकरणलिङ्गाप्तवाक्यादिसत्त्वेपि तया समुदायात्परया विभक्त्या कर्मत्वकर्तृत्वाद्यबोधप्रसङ्गात् । अवयवार्थे तदबोधनादिति त्वयोक्तत्वात् । न चेष्टापत्तिः । अनुभवविरोधादिति भावः ॥

यदि समुदायात्परविभक्त्या स्वार्थभूतकर्मत्वादेर्बोधनमवयवार्थेन स्यात् तर्हि केवलयौगिकस्थले प्रोक्षणीरासादयेत्यादावपि विभक्त्यर्थकर्मत्वादेरन्वयो न स्यात् । तत्रापि विभक्तेः समुदायात्परत्वात् । ननु चाखण्डसमुदायात्पराविभक्तिरेवावयवार्थे स्वार्थं न बोधयति रथकारमानयेत्यादौ प्रोक्षणीरित्यादिसखण्डसमुदायात्परा तु बोधयत्येवेति चेन्न । तत्र प्रकरणादिनाऽवयवार्थविवक्षायामप्यबोधनापातादित्युक्तत्वात् । विपक्षे बाधकं चाह—**अन्यथेति** । सखण्डसमुदायात्परयापि विभक्त्या

---

[1] ल्यहे–नं. उ.

नापि—रूढौ शाब्दानुभवकारणीभूता वर्णसमुदायगोचरा स्मृतिरेकेति शीघ्रा। एकशक्त्याधारवर्णेष्वेकैव स्मृतिरिति फलबलेन कल्पनात्; योगे तु अनेकशक्त्याधारा अनेकावयवगोचरा तु नानेति विलम्बितेति रूढेः प्राबल्यमिति युक्तम्। समुदायगोचराया एव स्मृतेरवयवगोचरत्वात्॥

अत एव शाब्दानुभवेतिकर्तव्यताभूता समुदायनिष्ठैकशक्तिस्मृतिः शीघ्रा। अवयवनिष्ठनानाशक्तिस्मृतिस्तु विलम्बितेति रूढेः प्राबल्यमिति निरस्तम्। समुदायशक्तिस्मारक[1]वर्णसमुदायगोचराया एवोपस्थितेरवयवविषयतया तज्जन्याया अवयवनिष्ठनानाशक्तिसमूहालम्बनस्मृतेर्विलम्बायोगात्। प्रत्युतसमुदायज्ञानस्यावयवज्ञानपूर्वकत्वादवयवैरेव[2] पूर्वं शीघ्रं स्वशक्तिस्मारणं युक्तम्॥

अत एवैकशक्तिस्मृतिजन्या समुदायार्थस्मृतिरेकेति शीघ्रा। अनेकशक्तिस्मृतिजन्यावयवार्थ

अवयवार्थे स्वार्थाबोधन इत्यर्थः। **नापीति**। युक्तमित्यन्वयः। स्मृतिरेकेत्येतद्व्यनक्ति—**एकशक्तीति**। **फलेति**। शाब्दानुभवरूपफलबलेनेत्यर्थः। **समुदायगोचराया एवेति**। तथाचैकत्वात्स्मृतेः कथं शीघ्रत्वविलम्बितत्ववैषम्यमिति भावः। अत एवेत्युक्तं व्यनक्ति—**समुदायेति**। **तज्जन्याया इति**। अवयवविषयोपस्थितिजन्याया इत्यर्थः। **अवयवैरिति**।

1 'वर्णसमुदाय शक्तिस्मारक' इत्यधिकम्—**सु.**  2 पूर्व इति नास्ति—**रा. सु. क. ग.**

स्मृति[1]र्नानेति विलम्बितेति परास्तम् । पदं न स्मारकमित्युक्तत्वात् । स्मारकत्वेप्यवयवनिष्ठशक्तिस्मृतावविलम्बस्योक्तत्वाच्च ॥

तस्माच्चतुर्धा[2]पि न रूढेर्योगात्प्राबल्यमिति । उच्यते ॥

अवयवे रूढिं विना समुदाये योगासंभवेनोपजीव्यत्वाद्रूढेः प्राबल्यं, शीघ्रत्वाच्च । तथा[3]च रूढार्थानुभवो वर्णानुभवश्च वर्णश्रवणमात्राद्भव[4]तीति शीघ्रः ॥

किंचा[5]खण्डत्वेन परस्परान्वयनिरपेक्षस्य तस्य विभक्त्यर्थान्वयः क्रियान्वयोपि शीघ्रः । यौगि-

---

स्मृतिविषयभूतैरित्यर्थः । **चतुर्धापीति** । विभक्त्यर्थस्य समुदायार्थबोधनेन, वर्णसमुदायगोचरस्मृतेः शीघ्रत्वेन, शक्तिस्मृतेः शीघ्रत्वेन, पदार्थस्मृतेः शीघ्रत्वेन, वा चतुर्धापीत्यर्थः ॥

"रूढि[6]मेव समाश्रित्य विभज्यार्थान्यथाक्रमम् ।

विशेषगुणपूर्त्यर्थं विष्णौ योगार्थमानयेत्" ॥

इति ऋग्भाष्योक्तिं हृदि कृत्वाह— **अवयवे[7] रूढिं विनेति** । अवयवस्यापि यौगिकत्वे तदवयवस्याप्येवमित्यनवस्थापातेन पूर्वपूर्वयोगासिद्ध्योत्तरोत्तरयोगासिद्धेर्मूलक्षतेः। 'अनवस्थानिवृत्त्यर्थं यौगिके रूढिकल्पने'ति कर्मनिर्णयोक्तेरिति भावः । वाक्ये पदात्पदार्थस्मृतेरनभ्युपगमाद्रूढार्थानुभव इत्युक्तम्। **परस्परेति** । अवयवार्थानामन्योन्यान्वयनिरपेक्षस्येत्यर्थः। **तस्येति** ।

---

[1] स्तुना–**रा. ग.** [2] अपिपदं न–**रा. ग.** [3] थाहिरू–**रा. सु. क. ग.** [4] वतीति–**रा. सु. क. ग.** [5] किंच इति नास्ति–**रा. ग.** [6] पमे–**नं उ.** [7] वरू–**उ. ए.**

कार्थानुभवस्तूपपदधातुप्रत्ययविभागज्ञानपूर्वक इति विलम्बितः। तेषां परस्परान्वयज्ञानपूर्वकः क्रियान्वयो[1]पि विलम्बितः। एवं च शीघ्रया रूढ्या प्रतिबन्धाद्वा शीघ्रोपस्थितेन रूढार्थेनान्वितस्य पदान्तरस्य यौगिकार्थे नैराकाङ्क्ष्याद्वानन्वयः॥

यद्यपि समुदायोपस्थितिरेवावयवगोचरा तथापि सा वर्णत्वरेफत्वादिनैव तद्गोचरा। सा च न यौगिकार्था[2]नुभवहेतुः। या तु यौगिका[3]र्थानुभवहेतु[4]रूपपदत्वादिनोपस्थितिः सा विलम्बिता। पङ्कजादौ त्वविरोधादवयवार्थेपि प्रयोगप्राचुर्येण प्रतिब[5]ध्यत्वे तन्त्रस्य तदप्राचुर्यस्याभावाच्च न रूढ्या तदपहारः॥

---

रूढार्थस्येत्यर्थः। **उपपदेति**। कुम्भकारेत्यादौ कुम्भाद्युपपदं[6] पाचकेत्यादौ पचिधा[7]त्वर्थाकप्रत्ययविभागः, यद्वा पङ्कजशब्दादौ पङ्कजाद्युपपदजनिधातुडप्रत्ययानां विभाग तज्ज्ञानपूर्वक इत्यर्थः॥

ननु उपपदादिज्ञानपूर्वकत्वेन योगे विलम्बोक्तिरयुक्ता समुदायोपस्थितिरेवावयवोपस्थितिरित्युक्तत्वादिति प्रागुक्तचोद्यमनूद्य निराह—**यद्यपीति**॥

नन्वेवं योगरूढिस्थलेपि रूढ्या योगापहारः स्यात्। तथाच पङ्कजपदाज्जलकमलधीर्न स्यात्। इत्यत आह—**पङ्कजादौ त्विति। तदप्राचुर्यस्येति**। प्रयोगाप्राचुर्यस्येत्यर्थः। एवं योगाद्रूढेरुपजीव्यत्व-

---

[1] अपि इति—**रा. ग.** [2] र्थोपस्थितिहे—**ग.** [3] र्थोपस्थितिह—**ग.** [4] रूप—**रा. ग.** [5] द्धत्वे—**रा. ग.** द्धार्थत्वे—**सु.** [6] विभाग. इत्याधिकम्—**नं. उ.** [7] त्वक-**नं. उ.**

अपहारोपि न यौगिकार्था स्मृतिः । स्मारकसंबन्धस्य शक्ते[1] रूढ इव यौगिकेपि सत्त्वात् । नापि प्रथममस्मृतिः। पङ्कजादावपि रूढ्या योगापहारापातात् । स्मारकत्वस्य निरासाच्च । नापि मण्युक्तान्वयबोधबहिर्भावः। भ्रमरूपस्याप्यन्वयबोधस्याभावे रथकाराधिकरणपूर्वपक्षानुदयापातात् । नापि प्रमारूपतद्बहिर्भावः । अनाप्तवाक्ये रूढस्यापि तद्बहिर्भावेन तस्याप्यपहारापातात् ॥

---

शीघ्रत्वाभ्यां प्राबल्योपपादनेन रूढ्या योगापहार इत्युपपादितम् । तत्रापहारपदार्थे स्वाभिमतं विवक्षुश्चत्वारि पक्षान्तराण्यनूद्य निराह— **अपहारोपीति** । स्मारकसंबन्धस्य शक्तेरिति सामानाधिकरण्यम् । **अस्मृतिरिति** । यौगिकार्थस्येति योज्यम् । **पङ्कजेति** । पङ्कजमानयेत्यादावपि यौगिकार्थस्य प्रथममस्मृत्या तत्र रूढ्या योगापहारापत्तेः । न चेष्टापत्तिः । जलकमलधीविरोधादिति भावः । **स्मारकत्वस्येति** । वाक्ये पदं न स्मारकमिति भाट्टाभिमताभिहितान्वयभङ्गे प्रतिपादितत्वेन रूढेरपि प्रथमं रूढार्थास्मारकत्वाद्रूढेरप्यपहारापातादिति भावः । अन्वयबोधबहिर्भावः किं भ्रमरूपान्वयबोधाविषयत्वं उत प्रमारूपतदविषयत्वम्। आद्यमसिद्धमिति भावेनाह— **भ्रमेति** । रथकारेति वचनाद्रथकारस्याधानमिति षष्ठाद्यपादीयोपान्त्याधिकरणे रथकारशब्दस्य यौगिकत्वेन रथकर्तृत्रैवर्णिकपरत्वेन पूर्वपक्षकरणादिति भावः । द्वितीयेऽतिप्रसङ्गमाह— **अनाप्तेति** । पङ्कजमस्तीत्याद्यनाप्तवाक्यस्य तार्किकमते बोधकत्वाभावेन तत्र रूढार्थस्य शाब्दबोधाविषयत्वेनेत्यर्थः ॥

---

[1] क्तः रू–ग. रा.

किंतु तात्पर्य[1]विषयबहिर्भावः । तस्मान्मण्डपं पश्येत्यादौ[2] निरवकाशप्रकरणादेरभावे रूढ्या योगापहारः । भावे तु योगग्रहः । मण्डपं भोजयेत्यादौ रूढस्यायोग्यत्वाद्योगग्रहः ॥

तदुक्तमनुव्याख्याने --"पूर्वायोगे परग्रह" इति । उपजीव्यत्वेन शीघ्रत्वेन पूर्वस्या[3] रूढेरयोगे[4] परस्य योगस्य ग्रह इत्यर्थः । न तु तत्र मीमांसकोक्ता लक्षणा । योगस्यापि शक्तित्वेन मुख्यत्वात् । समुदायशक्त्यसंभवेन्तरङ्गक्लृप्तावयवशक्तावेव बुध्यवताराच्च । मुख्यार्थबाधाद्यनुसन्धानानपेक्षत्वेन शीघ्रत्वाच्च । लक्षणायाश्चातथात्वात् ॥

---

नन्वेवं रूढेः प्राबल्येन तया योगार्थस्य तात्पर्याविषयत्वरूपापहारे सति जन्माद्यधिकरणादौ तद्विजिज्ञासस्व तद्ब्रह्मेति श्रौतब्रह्मशब्दे रूढजीवत्यागेन यौगिकविष्णुग्रहणं कथमुक्तमित्याशङ्कां परिहरन्नुपसंहरति—**तस्मादिति** । जन्मादिनये तु निरवकाशलिङ्गादेव यौगिकग्रह इति भाव । **तदुक्तमिति** । रूढेरुपजीव्यत्वादिना पूर्वभावित्वात्तदसंभव एव योगग्रहणमित्येतत्पूर्वोदाहृतानुव्याख्याने उक्तमित्यर्थः । **न तु तत्रेति** । मण्डपं भोजयेत्यादौ रूढ्यर्थगृहविशेषस्यान्वयायोग्यत्वाद्रूढार्थगृहसंम्बन्धिपुरुषज्ञानं लक्षणया मण्डपपदेन जायत इति मीमांसकोक्तं न भवतीत्यर्थः । **अतथात्वादिति** । उक्तत्रैविध्यवैपरीत्यादित्यर्थः ॥

---

[1] र्यार्थ—ग. [2] योगे इत्य-सु-ग. [3] स्या.—सु. [4] अप—सु.

**न चात्र योगस्य बाधकमस्ति । प्रबलाया रूढेरयोग्यतया निवृत्तेः । तत्पूर्विकाया लक्षणायाश्चोक्तहेतुभिर्योगाद्दुर्बलत्वाच्च ॥**

**न च रूढिपूर्वकलक्षणया रूढी रक्ष्यते । रूढ्यबाधे लक्षणाया एवानुदयात् । येन प्रबलरूढ्य[1]पेक्षया लक्षणा प्रबला स्यात् ॥**

---

ननु—मुख्यत्वेपि योगस्य त्यागोऽस्त्वित्यत आह—**न चात्रेति** । यद्वा—अत्राप्यस्ति मुख्यार्थबाधतद्योगानुसंधानमित्यत आह—**न चात्रेति** । तदेव व्यनक्ति—**प्रबलाया इति** । **उक्तेति** । योगस्यापीत्यादिनोक्तहेतुभिरित्यर्थः[2] ॥

ननु—रूढिपूर्वकलक्षणाया रूढ्याश्रयेण बलवत्त्वाद्योगबाधकत्वमस्त्वित्यत आह—**न चेति** । [3]रक्ष्यत इत्यन्वयः । कुतो न रक्ष्यत इत्यत आह—**रूढीति** ॥

नन्वे[4]वमुद्गातृचमसमेकस्य श्रुतिसंयोगादिति तृतीयाध्यायपञ्चमपादीयाष्टमाधिकरणे प्रैतुहोतुश्चमसः प्रब्रह्मणः प्रोद्गातॄणामित्युदाहृत्योद्गायन्तीत्यवयवप्रसिद्ध्या गानकारिणामपसुब्रह्मण्यानां त्रयाणां छन्दोगानां चमसभक्षणमिति पूर्वपक्षयित्वा उत्पूर्वस्य गायतेः समुदायप्रसिद्धिरूपरूढ्या द्वितीयसामभक्तिविषयत्वेनोद्गातुरेव तद्गातृत्वेन ससुब्रह्मण्यानां चतुर्णां लक्षणेति शाबरभाष्ये स्थापितत्वात् । वार्तिककृता चापसुब्रह्मण्यानां त्रयाणां लक्षणेति स्थापितत्वात् कथमेवमुक्तिरित्यतस्त-

[1] ढ्याश्रयेण—**रा-ग.** [2] तत्रैव लक्षणेति । नीलवान् घट इति मतुबर्थलक्षणेत्यर्थः । अभेदे । अभेदवादे । भेदे चेति । गुणगुणिनोर्भेदवादे चेत्यर्थः । मतुब्लोपेनेति । तदस्यास्त्यस्मिन्निति सूत्रेण गुणवचनेभ्यो मतुब्लोपो वक्तव्यः इत्यनुशासनात् । इत्यधिकम्—**ए.** [3] व—**उ. ए.** [4] एवं इति नास्ति—**नं. उ.**

प्राद्गातॄणामित्यत्राप्युद्गातृशब्दस्योद्गातृप्रस्तो - तृप्रतिहर्तृसुब्रह्मण्येषु [1] चतुर्षु अपसुब्रह्मण्येषु त्रिषु-वोद्गानकर्तृत्वाद्योग एव। न तु ऋत्विग्विशेषे उद्गातरि[2] योगरूढिः। तत्पूर्विका तेषु लक्षणा। यत्र तु रूढिपूर्वकलक्षणायां तात्पर्यं निरवकाश-मानासिद्धं तत्र योगं बाधित्वा सापि भवत्येव ॥

एतदप्युक्तं "पूर्वायोगे परग्रह" इति। पूर्वस्या रूढेरयोगे अनन्तरस्य मुख्यवृत्तिरूपस्य योगस्य ग्रहः। न तु लक्षणायाः। योगस्याप्ययोगश्चेत्प-रस्यामुख्यवृत्तेर्लक्षणाया ग्रह इत्यर्थः ॥

रूढ्यादिवृत्तित्रयस्य बलाबलनिर्णयः ॥ ७१ ॥



## अथ लक्षणातो गौण्याः प्राबल्यनिर्णयः ॥ ७२ ॥

अमुख्यवृत्तौ गौणीतो लक्षणा जघन्या।

दुभयोक्तमप्ययुक्तमिति भावेनाह—**प्रोद्गातॄणामिति**। सापि—लक्ष-णापीत्यर्थः। **एतदपीति**। रूढेरसंभवे योगस्यैव ग्रहणं न तु लक्षणाया इत्येतत्। तथा योगस्याप्यसंभव एव लक्षणेत्येतदपीत्यर्थः ॥

रूढ्यादिवृत्तित्रयस्य बलाबलनिर्णयः ॥ ७१ ॥

अथ लक्षणातो गौण्याः प्राबल्यनिर्णयः ॥ ७२ ॥

एवं मुख्यवृत्तित्रये प्राबल्यदौर्बल्ये निरूप्यामुख्यवृत्त्योरपि ते आह—**अमुख्यवृत्ताविति**। जातावेकवचनम्। जघन्या—**निकृष्टे-**

[1] चतुर्ष्विति नास्ति—रा. ग.　[2] तर्यादौ—रा. सु. ग.

**ननु—**

**न तावद्गौण्यां प्रथमोपस्थितसादृश्य एव-तात्पर्यम् लक्षणायां तु प्रथमोपस्थितसंबन्धद्वारा पूतत्वादाविति लक्षणा विलम्बितत्वाज्जघन्येति युक्तम्। लक्षणायामपि मञ्चाःक्रोशन्तीत्यादौ मञ्चसंबन्ध एव तात्पर्यात् ॥**

**नापि गौण्यां तात्पर्यविषये सिंहसादृश्ये निरूपकतया सिंहोनुप्रविष्टः, लक्षणायां तु तात्पर्यविषये पूतत्वादौ गङ्गा नानुप्रविष्टेति लक्षणा मुख्यार्थासंस्पर्शिनीति जघन्या। काकेभ्यो दधि रक्ष्यतामित्यादावपि काकशब्देन दध्युपघातकस्यैव विवक्षितत्वान्न मुख्यार्थसंस्पर्श इति युक्तम्। मञ्चाः क्रोशन्तीत्यादावपि संबन्धनिरूपकतया मञ्चानुप्रवेशात् ॥**

---

त्यर्थः। स्वयं प्रधानबाधादिना लक्षणाया जघन्यत्वं विवक्षुर्लक्षणाजघन्यत्वे प्रकारान्तरेण प्रसक्तं हेतुचतुष्टयं क्रमेणानूद्य निराह—**ननु न तावदित्यादिना अत्रोक्तं सुधायामिति पर्यन्तेन**। उक्तं विलम्बितत्वं लक्षणायामसिद्धमित्याह—**लक्षणायामपीति**। **नापीति**। युक्तमित्यन्वयः। क्वचिदजहत्स्वार्थलक्षणादावस्ति मुख्यार्थकाकादिसंस्पर्श इत्यत आह—**काकेभ्य इति**। **संबन्धेति**। मञ्चसंबन्धिपुरुषाः क्रोशन्तीत्यर्थतया मञ्चानां संबन्ध[1]निरूपकत्वेन लाक्षणिकार्थेनुप्रवेशादित्यर्थः ॥

---

[1] न्धिनि-**नं. उ.**

नापि—सिंहशब्दस्य येन माणवकेनान्वयानुपपत्तिः तत्रैव माणवके वृत्तेर्गौण्याः[1] गङ्गाशब्दस्य तु येन घोषेणान्वयानुपपत्तिस्तं विहायान्यत्र तीरे वृत्तेर्लक्षणाया[2] मान्द्यम्। न च नीलो घट इत्यादौ गुणवाचिनो नीलशब्दस्य येन घटेनान्वयानुपपत्तिस्तत्रैव लक्षणा दृष्टेति वाच्यम्। गुणगुणिनोरभेदेऽ[3]नुपपत्त्यभावेन भेदे च मतुब्लोपेन तत्र लक्षणाया एवाभावात्। लाङ्गलं जीवनमित्यादौ यद्यपि जीवनशब्दस्य येनलाङ्गलेनान्वयानुपपत्तिस्तत्रैव लाङ्गले वृत्तिस्तथापि अतिप्रियत्वादिना सादृश्याज्जीवनशब्दो लाङ्गले गौण एव न तु लाक्षणिक इति युक्तम्। गौण्यामपि सिंहस्याध्ययनमित्यादौ अध्ययनान्वयानुपपत्त्या माणवकपरत्वे[4] मान्द्यात्॥

---

**नापीति**। युक्तमिति दूरेन्वयः। **अन्वयेति**। अभेदादिरूपान्वयानुपपत्तिरित्यर्थः। **घोषेणान्वयेति**। आधाराधेयरूपान्वयानुपपत्तिरित्यर्थः। **तत्रैव लक्षणेति**। नीलवान्घट इति मतुबर्थलक्षणेत्यर्थः। **अभेदे**। अभेदवादे। **भेदे चेति**। गुणगुणिनोर्भेदवादे चेत्यर्थः। **मतुब्लोपेनेति**। "तदस्यास्त्यस्मिन्निति" सूत्रे "गुणवचनेभ्यो मतुबो लुग्वक्तव्यः" इत्यनुशासनादिति भावः। **लाङ्गलेनान्वयेति**। अभेदान्वयानुपपत्तिरित्यर्थः। **सादृश्यादिति**। जीवनं यथातिप्रियं लाङ्गलमप्येवमिति सादृश्यादित्यर्थः। **गौण्यामपीति**। मान्द्यादित्य-

---

[1] ण्यांशे—सु. ग. [2] यां मा—रा. सु. ग. [3] देन्वयानु—सु. [4] त्वेन-मान्द्या—रा. सु. ग.

लक्षणा । रूढिपदेन योगस्याप्युपलक्षणात् ॥

पङ्कजादिशब्दानां[1] कुमुदादौ लक्षणाभङ्गः ॥ ६३ ॥

## अथ लक्षणागौण्योर्लक्षणम् ॥ ६४ ॥

(मुख्यार्थसंबन्धो वा तं निमित्तीकृत्य वृत्तिर्वा

मित्यत आह—**रूढिपदेनेति** । यद्यपि सुधायां रूढिरित्युपलक्षणं वृत्तिरङ्गीकृता यत इति व्याख्यातम् । तथापि वृत्तिपदं रूढियोगरूपवृत्तिद्वयमात्रपरम् । न तु लक्षणादिसाधारणम् ।

"रूढियोगौ विना कश्चिन्नैवार्थो वेदगो भवेत्"

इत्यादिविरोधादिति भावेन योगस्येत्येवोक्तम् । प्रकृताभिप्रायेण योगस्येत्युक्तिरित्येके ॥

पङ्कजादिपदाना कुमुदादौ लक्षणाभङ्गः ॥ ६३ ॥

### अथ लक्षणागौण्योर्लक्षणं ॥ ६४ ॥

शब्दस्य वृत्तिस्त्रेधा[2], अभिधा लक्षणा गौणी चेति पूर्वं निर्दिष्टाभिधावृत्तिं सप्रभेदं निरूप्य निर्देशक्रमेण लक्षणागौण्योर्लक्षणमाह-- **मुख्यार्थेति** । परशब्दस्य परत्र वृत्तिहेतुत्वेन प्रसिद्धस्य सबन्धस्य वृत्तिविशेषलक्षणात्वायोगादरुच्या —

"प्रयोगयुक्तसादृश्यं संबन्धो वाप्यमुख्यतः ।

वृत्तिहेतुरिति ज्ञेयः"—

इत्यनुव्याख्यानसुधयोरुक्तयनुरोधेनाह—**तं निमित्तीकृत्य वृत्तिर्वेति** ।

[1] दिपदानां—क. [2] त्रिधा—ड.

लक्षणा । तत्सादृश्यं वा तन्निमित्तीकृत्य वृत्ति-र्वा गौणी । द्वे अपि रूढारूढभेदेन प्रत्येकं द्विविधे ॥

तत्र रूढलक्षणा यथा,[1] मञ्चाः क्रोशन्तीति । अरूढलक्षणा यथा, गङ्गायां घोष इति । रूढ-गौणी यथा, मृदङ्गवादौ गवादिशब्दस्य । अरूढि[2]-गौणी यथा, सिंहो देवदत्त इति ॥

न तु मण्युक्तरीत्या अशक्योपस्थितिर्वा, शक्य-संबन्धादशक्यासदृशान्वय[3]परोपस्थितिर्वा अश-क्योपस्थितिहेतुः शक्यसंबन्धो वा, अशक्यासदृ-शान्वयप्रतियोग्युपस्थितिहेतुः स्वशक्यसंबन्धो वा,

---

वृत्तिरर्थप्रतिपादकत्वम् । एवमग्रेपि ॥

आनुमानिकपादीयन्यायविवरणाद्युक्तयनुरोधेनाह—**द्वे अपीति** । **गङ्गायामिति** । पावित्र्यसामीप्यादिप्रतिपादनेच्छयैव गङ्गायां घोष इत्यादिप्रयोगादिति भावः । **सिंहो देवदत्त इतीति** । देवदत्ते क्रौर्याद्युप-पादनेच्छया तादृशप्रयोगोक्तिरिति भावः । **मण्युक्तरीत्येति** । लक्षणा-वादे मण्युक्तेत्यर्थः । **अशक्येति** । शक्त्यविषयस्य पदार्थस्योपस्थिति-रित्यर्थः । गौण्यामतिव्याप्तेर्लक्षणान्तरोक्तिः । **शक्येति** । शक्तिविषय-पदार्थसंबन्धान्निमित्ताद्या उपस्थितिस्तन्मात्रस्य शक्यादावतिप्रसङ्गात् सा किंरूपेत्यत उक्तमशक्येत्यादि । शक्त्यविषयो यः शक्तिविषयेणा-सदृशश्चार्थः तन्निरूपितान्वयबोधप्रयोजनिकेत्यर्थः । **स्वेति** बुद्धिस्थो

---

[1] संभवाः क्रो—**क.**　[2] ढगौ—**रा. सु. क.**　[3] यप्रतियोग्युप—**क.**

लक्षणा। चतुर्ष्वपि पक्षेष्वाभिप्रेतान्वयपरा स्मृतिरूपोपस्थितिरेव नास्तीत्युक्तत्वात् ॥

आद्ययोरात्मनिष्ठाया उपस्थितेः[1] शब्दनिष्ठलक्षणात्वायोगाच्च। आद्ये घटशब्दात्कारणत्वेनाकाशोपस्थितौ गौण्यां चातिव्याप्तेश्च ॥

द्वितिये शक्येन सदृशे सम्बद्धे च वस्तुनि सम्बन्धस्य विवक्षया या लक्षणा तस्यामव्याप्तेश्च ॥

तृतीयचतुर्थयोः[2] शब्दस्य परत्र वृत्तिहेतुत्वेन प्रसिद्धस्य संबन्धस्य वृत्तिविशेषलक्षणात्वायोगाच्च॥

गङ्गायां मत्स्य इत्यत्रापि गङ्गाशब्दस्य तीरे

---

गङ्गादिशब्दो गृह्यते। लक्षणा न त्विति पूर्वेणान्वयः। **उक्तत्वादिति**। भट्टाभिमताभिहितान्वयभङ्ग उक्तत्वादित्यर्थः ॥

शक्तिस्मरणवाक्यार्थबोधयोर्मध्ये पदार्थस्मरणमस्तीति न्यायमतरीत्यापि दोषोस्तीति भावेनाह—**आद्ययोरिति**। उपस्थितिहेतुत्वादिना केनचित्सम्बन्धेनोपस्थितेः शब्दनिष्ठत्वं मन्वानं प्रत्याह—**आद्य इति**। यद्वा चतुष्टयसाधारणं तत्राप्याद्यद्वयसाधारणं दोषमुक्त्वा आद्यद्वयेपि प्रत्येकं दोषमाह—**आद्य इत्यादिना** ॥

परमते शब्दं प्रत्याकाशस्य कारणत्वात्कारणत्वेनेत्युक्तम्। कारणतारूपसम्बन्धेन निमित्तेनेत्यर्थः। अलाक्षणिकत्वाभिप्रायेण प्रयुक्तस्य घटशब्दस्याकाशे लक्षणाभावादतिव्याप्तेरित्युक्तम्। लक्षणस्या-

---

1 'शब्दनिष्ठाया उपस्थितेः' इत्यधिकम्—रा. 2 परेत्याधिकम्—सु. क.

शक्तिद्वारकसम्बन्धस्य[1] परत्र वृत्तिहेतुत्वेन प्रसिद्धस्य सम्बन्धस्य सत्त्वेन लक्षणापाताच्च ॥

एतेन लक्षणास्थले सम्बन्ध एव वृत्तिः शाब्दोपस्थितिहेतुत्वात्, शक्तिवदिति मण्युक्तं निरस्तम्। शक्त्या[2]प्रतिपादकत्वस्यैवाभिधावृत्तित्वोक्तेः ॥

अत एव—

'अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते'

इति निरस्तम्। अविनाभूते[3] सादृश्यविवक्षया या

सत्त्वोपपादनाय सदृश इत्युक्तम्। **शक्तिद्वारकेति**। शक्तिविषयप्रवाहसम्बन्धस्य सत्त्वादशक्यतीरोपस्थितिहेतुत्वाच्च। तत्रातिव्याप्तिरित्यर्थः। सम्बन्धं निमित्तीकृत्य प्रतिपादकत्वं लक्षणेत्युक्तौ तु न दोष इति भावः। **सम्बन्ध एवेति**। शक्यसम्बन्ध एवेत्यर्थः। **शक्तिवदिति**। ईश्वरसङ्केतरूपसम्बन्धस्यैव शक्तित्वादिति भावः। दृष्टान्ते साध्यवैकल्यमिति भावेनैतेनेत्युक्तं व्यनक्ति - **शक्त्येति**। **उक्तेरिति**। रूढ्यादिलक्षणोक्तिप्रस्ताव इत्यर्थः ॥

एवं मण्युक्तलक्षणचतुष्टयं निरस्य यानि वाद्यन्तरोक्तानि; अभिधेयाविनाभूतप्रतीतिर्वा, परम्परासम्बन्धघटकप्रतीतिर्वा, मुख्यार्थसम्बन्धिनिवृत्तिर्वा, अशक्ये तात्पर्यं वा, अशक्यासदृशे तात्पर्यं वा, वक्त्रभिप्रायो वेति, षड्लक्षणावृत्तिलक्षणानि तानि क्रमेण निराह—**अत एवेत्यादिना**। **अभिधेयेति**। अभिधेयस्य प्रवाहादेरविनाभूतस्य तीरादेः प्रतीतिरित्यर्थः ॥

अत एवेति परामृष्टं हेतुं व्यनक्ति—**अविनाभूत इति**।

[1] न्धस्य सत्त्वेन—**ल. रा. सु. क. ग.** [2] क्याप्र—**सु. क.** [3] 'अपि' इत्यधिकम्- **सु.**

**गौणी तस्यामतिव्याप्तेः । मञ्चाः क्रोशन्तीत्यादावव्याप्तेश्च । क्रोशनसमये मञ्चपुरुषयोरविनाभावेपि धूमोस्तीतिवाक्यबुद्धधूमजन्यवह्न्यनुमितावतिव्याप्तेश्च ॥**

**अविनाभावशब्दस्य लक्ष्येण सह परंपरासंबन्धघटकत्वविवक्षायां [1] नियतसंबन्धरूपाविनाभावांशेन सबन्धेनैव तद्घटनान्नियमांशवैयर्थ्यम् ।**

---

वामहस्तो दक्षिणहस्त इत्यादाविति भावः । मञ्चाः क्रोशन्तीत्यादौ लक्षणा न स्यात् स्याच्च शब्दात्प्रतीतेन लिङ्गेनानुमितार्थस्येति सुधोक्तिं विवृण्वानो दोषान्तरमाह—**मञ्चा इति** । तत्र मञ्चपुरुषयोरविनाभावाभावादिति भावः ॥

ननु तत्रापि तदानीमविनाभावोस्ति तथैव मण्युक्तेरित्यत आह—**क्रोशेनेति** । **अनुमिताविति** । तस्याभिधेयधूमाविनाभूतवह्निगोचरप्रतीतित्वेन तत्र लक्षणसत्त्वादिति भावः ॥

ननु—गङ्गादिशब्दस्य तीरादिप्रतीतिजनने न साक्षात्संबन्धोस्ति । किंतु साक्षात्स्वसम्बन्धवदभिधेयसम्बन्धवत्त्वरूपपरंपरासम्बन्ध एव । तथा च शब्दस्याभिधेयाविनाभूतप्रतीतिर्लक्षणेत्यस्य परंपरासंबन्धप्रतीतिर्लक्षणेत्यर्थः । न च लक्षितलक्षणायामव्याप्तिः । तस्यापि परंपरासबन्धवत्त्वादिति भावेन द्वितीयमाशङ्क्य निराह—**अविनाभावशब्दस्येति** । अविनाभावांशेन—अविनाभावशब्दार्थैकदेशेनेत्यर्थः । मुख्यार्थसंबन्धिनि वृत्तिर्लक्षणेत्युक्त्यैव सामञ्जस्यादिति भावः ॥

[1] तु इत्यधिकम्—रा. सु. ग.

अत एव न मुख्यार्थसंबन्धिनि वृत्तिर्लक्षणा। तस्मिन्नेव सादृश्यविवक्षया या गौणी तस्यामतिव्याप्तेः। नाप्यशक्ये वा शक्यासदृशे वा तात्पर्यं लक्षणा। आद्ये गौण्यामतिव्याप्तेः। अन्त्ये सदृशे संबद्धे च सम्बन्धविवक्षया लक्षणायामव्याप्तेः। [1]उभयत्रापि गाव्यादिशब्दतात्पर्येष्वतिव्याप्तेश्च। नापि स्वार्थसम्बन्धेनेदं पदममुमर्थं बोधयिष्यतीति वक्तुरभिप्रायो लक्षणा। [2]वेदे तदभावात्। लघुत्वाच्छब्दधर्मत्वाच्च। सबन्धेन बोधकत्वस्यैव

लक्षणान्तरं च प्रत्याह–**अत एवेति**। अत एवेति परामृष्टदोषं व्यनक्ति—**तस्मिन्नेवेति**। मुख्यार्थसंबन्धिन्येवेत्यर्थः। प्रवाहवत्तीरस्यापि पावित्र्यादिसादृश्यविवक्षया तीरं गङ्गेति यत्र प्रयुज्यते तत्रेति भावः। या तु मुख्यार्थसम्बन्धिन्यर्थान्तरे वृत्तिरिति प्रमाणलक्षणटीकोक्तिः सा सुधारीत्यैव व्याख्येयेति भावः। **अशक्येवेति**। तात्पर्यमित्यन्वयः। **गौण्यामिति**। सिंहश्चैत्र इत्यादावशक्ये चैत्रे सिंहपदस्य गौणस्य तात्पर्यसत्त्वादिति भावः। **सादृश्य इति**। चैत्रमैत्रगृहयोः सदृशयोश्चैत्रगृहसंबन्धमेव मैत्रगृहं [3]न दूर इति वक्तुं चैत्रगृहमेव मैत्र[4]गृहमिति प्रयोगस्तत्राव्याप्तेरित्यर्थः। अशक्यत्वेऽप्यसदृशत्वाभावादिति भावः। **गाव्यादीति**। वृत्तिशून्यापभ्रष्टशब्देषु गोपिण्डादितात्पर्यकेष्वित्यर्थः॥

**नापि स्वार्थेति**। शक्यादिस्थले अतिव्याप्तिनिरासाय स्वार्थसंन्बधेनेत्युक्तम्। सादृश्यं न संबन्ध इति भावः। **वेदे तदभावा-**

[1] नाप्यशक्ये इत्यारभ्य नास्ति–**रा. ग.** [2] तदेत–**रा. ग.** [3] होन–**उ. नं.** [4] अत्र सर्वत्र 'ग्र' इत्यस्ति–**नं. उ. ए.**

लक्षणात्वसम्भवे तद्विपरीतस्याभिप्रायस्य तत्त्वायोगाच्च। अन्यथा शक्तचेदं पदममुमर्थं बोधयिष्यतीत्यभिप्रायोऽभिधा स्यात्। यद्यपि शक्तिं सादृश्यं [1]चा निमित्तीकृत्यार्थप्रतिपादकत्वं लक्षणा शक्तिं संबन्धं [2]चानिमित्तीकृत्य वृत्तिर्गौणीत्यपि वक्तुं शक्यम्। तथापि लाघवार्थं प्रतिपादने हेतुकथनार्थं चानुव्याख्याने सबन्धसादृश्यमुखमेव लक्षणमुक्तम्। गामुच्चारयेत्यत्रापि लक्ष्यस्य गोशब्दस्य शक्येन गवा शक्तिरूपः संबन्धोस्त्येवेति नाव्याप्तिः॥

---

दिति। वेदापौरुषेयत्वस्य प्रथमपरिच्छेदे समर्थनेन तत्र वक्तुरभावादित्यर्थः। तद्विपरीतस्य लघुत्वशब्दधर्म[3]हीनस्येत्यर्थः। अन्यथेति। गौरवादेरदोषत्व इत्यर्थः॥

एवं स्वमते लक्षणमुक्त्वा परोक्तलक्षणानि च निरस्य स्वोक्तलक्षणे दोषमाशङ्क्य समाधत्ते — यद्यपीति। वृत्तिरर्थप्रतिपादकत्वम्। लाघवार्थमिति। अभा[4]वाघटितत्वादिति भावः। प्रतिपादन इति। वृत्तिसत्त्व इत्यर्थः॥

नन्वथापि शक्यसंबन्धं निमित्तीकृत्य वृत्तिर्लक्षणेति लक्षणमव्याप्तमित्यत आह—गामिति। पिण्डस्योच्चारणकर्मत्वायोगाद्गामिति द्वितीयान्तस्य गोपदस्य गोशब्दमित्यर्थो लक्षणया गृह्यते। तत्र च द्वितीयान्तगामिति पदस्य शक्यो गोपिण्डः तत्सम्बन्धो वाचकत्वरूपोस्त्येव

---

[1] च नि–सु. रा. वा–क. [2] वा–क. [3] त्वविपरीतस्ये–नं. उ. ए. [4] वध–नं ए.

तत्र[1] च शक्तिर्न शक्तित्वेन हेतुः। किंतु शक्यसम्बन्धित्वेने[2]ति नाभिधात्वम्। जबगडदशमाहेत्यादिलक्षणायामपि वर्णानां प्रत्येकमुच्चारणकर्मत्वात्प्रत्येकं चाक्षराणामेकाक्षरकोशेष्वर्थवत्त्वावगमाच्छक्यसम्बन्धोस्त्येव ॥

तस्मान्मण्याद्युक्तानि चत्वार्यन्यानि षडिति लक्षणालक्षणदशकमयुक्तमित्यनुव्याख्यानोक्तमेव लक्षणं युक्तमित्याद्यूह्यम् ॥

---

गोशब्दस्येति न तत्र संबन्धाभाव इत्यर्थः। पुल्लिङ्गोप्यस्ति गोशब्द इति शक्येन गवेत्युक्तम् ॥

नन्वेवं शक्तिरूप एव चेच्छक्यसंबन्धस्तर्हि घटपदस्य घट इवाभिधा वृत्तिः स्यादित्यत आह--**तत्र चेति। न शक्तित्वेनेति।** अभिधायां तु तथैव हेतुरिति भावः। **एकाक्षरकोशेष्विति।** 'जं कटीभूषणे पल्लयामिति, बं कुंभे वरुणे बिंदा' विति, गं गीते गा च गाथायामिति, डः पुमान्विषये शंभाविति, दं क्लीबे पानवैराग्यकलत्रेष्वित्यर्थवत्त्वावगमादित्यर्थः। **लक्षणालक्षणेति।** लक्षणावृत्तिलक्षणेत्यर्थः ॥

एवं गौणवृत्तेरपि परोदीरितलक्षणानि निरस्यानीति भावेनाह— **इत्याद्यूह्यमिति।** तथा हि— गौर्वाहीक इत्यादिगौणवृत्तौ स्वार्थसहचारिणो गुणाः जाड्यमान्द्यादयः लक्ष्यमाणा गोशब्दस्य वाहीके वृत्तौ निमित्तमित्येके ॥

---

1 'तु' इत्यधिकम्-सु. ग.　　2 नैवे-रा. सु. क.

**एतेन गङ्गाशब्देन बोधितस्य पूरस्य तीरबोधकत्वे तीरस्य सप्तम्यर्थान्वयो न स्यात् विभक्तीनां प्रकृत्यर्थान्वितस्वार्थाभिधायित्वादिति निरस्तम् । परंपरासंबन्धेन शब्दस्यैव तीरबोधकत्वात् । अत एवानुव्याख्याने प्रयोगयुक्तपदेन शक्तिसंबन्धो दर्शितः ॥**

**लक्षणागौण्योर्लक्षणम् ॥ ६४ ॥**



लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता इति ।

तन्न । तथात्वे गौण्या लक्षणातो भेदाभावप्रसङ्गात् । गोशब्दस्य वाहीके वृत्तौ लक्ष्यमाणगुणानां निमित्ततायाश्चोपपत्तिशून्यत्वात् । लक्ष्यमाणगुणसादृश्याद्गुणान्तरं लक्ष्यते ततो गुणी लक्ष्यते इत्यनानुभविकम् ॥

यत्तु—स्वार्थसहचारिगुणाभेदेन परार्थगतगुणा एव लक्ष्यन्त इति तत्तु गुणानां भेदस्याक्षादिमानसिद्धत्वेनापेशलम् । तस्मात्सदृशगुणाश्रयत्वं निमित्तीकृत्य वृत्तिर्गौणीत्येव युक्तमिति । पदार्थस्यैव करणत्वमिति मतोक्तदोषमनूद्य स्वमते नेत्याह—**एतेनेति** । **सप्तम्यर्थेति** । आधारत्वरूपेत्यर्थः । **प्रकृत्यर्थेति** । पदार्थकरणत्वपक्षे तीरस्य प्रकृत्यर्थत्वाभावादिति भावः । **परंपरेति** । शक्यसंबन्धेनेत्यर्थः ॥

लक्षणागौण्योर्लक्षणम् ॥ ६४ ॥



## अथ लक्षणादिहेतूक्तिः ॥ ६५ ॥

अन्ये तु—

"मुख्यार्थबाधे तद्योगे रूढितोथ प्रयोजनात् ।
अन्यार्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया"।

इति लक्षणादौ हेतुत्रयमाहुः । तन्न ।

---

अथ लक्षणादिहेतूक्तिः ॥ ६५ ॥

एवं लक्षणादिवृत्तेर्लक्षणमुक्त्वा प्रयोगयुक्त्यनुव्याख्यानोक्त[1]-शक्यसंबन्धशक्यसादृश्ययोरेव लक्षणादिबीजत्वं मुख्यार्थबाधादेः पूर्वा-योगे परग्रह इत्युक्तप्रकारेणामुख्यार्थग्रहणहेतुत्वं च समर्थयमानः काव्यप्रकाशिकाद्युक्तमनूद्य निराह—**अन्ये त्विति । रूढित इति ।** मञ्चाः क्रोशन्तीत्यादौ गङ्गायांघोष इत्यादौ पावित्र्यादिज्ञापनप्रयोजनात् अन्यार्थोऽमुख्यार्थो यत् यस्माद्व्यापाराल्लक्ष्यते ज्ञायते सा आरोपिता क्रिया आरोपितः शब्दव्यापारो लक्षणेत्यर्थः । शब्दव्यापारस्यारोपितत्वं च मुख्यार्थव्यवहितार्थनिष्ठत्वं ज्ञेयम् । लक्षणादौ लक्षणागौण्योः । गौणवृत्तिपक्षे तद्योग इत्यत्र तत्सदृश इति ध्येयम् । **बाधे तद्योग इति ।** निमित्तार्थे सप्तम्यौ ॥

रूढितोथ प्रयोजनादित्यस्य वैकल्पिकैकहेतुपरत्वाद्रूढित इत्यस्य लक्षणाप्रभेदत्वेनाहेतुरूपत्वाद्वा मुख्यार्थबाधतद्योगाभ्यां सह त्रयो हेतव इति भावेनाह—**हेतुत्रयमिति** ॥

---

[1] क्तश–उ.

**गङ्गाशब्दो ह्यशक्यतीरबोधनेतिप्रसङ्गान्नियामकं शक्तिस्थानीयं शक्यसंबन्धमेवापेक्षते। वक्ताप्यनेन संबन्धेन गङ्गापदं तीरं बोधयिष्यतीत्यभिप्रेत्यैव प्रयुङ्क्ते । न तु मुख्यानुपपत्तिर्बोधनार्थं शब्देन प्रयोगार्थं वक्त्रा वापेक्ष्यते । अनुपपत्तिदर्शनस्य बोधकशब्दप्रयोगोत्तरकालीनत्वात् । तस्य प्रथमोपस्थितमुख्यार्थत्यागमात्रहेतुत्वेन तीरबोधनेऽनपेक्षितत्वाच्च । किं तु प्रतिपत्त्रा मुख्यार्थत्यागाया-**

मुख्यार्थबाधरूपहेतुं तावन्निराचिकीर्षुः स किं शब्देनापेक्ष्यमाणत्वाद्वा हेतुरुत वक्त्रा प्रयोगार्थमपेक्ष्यमाणत्वात्प्रतिपत्त्रा वा लक्ष्यप्रतिपत्त्यर्थमपेक्ष्यमाणत्वादिति कल्पान् हृदि कृत्वाद्यं निराह—**गङ्गाशब्दो-हीति** । आवश्यके वक्तृश्रोत्रपेक्षिते तीरबोधन इत्यर्थः । आशङ्क्येति क्वचित्पाठः ॥

द्वितीयं निराह—**वक्त्रापीति** । उभयत्रैवकारव्यावर्त्यमाह—**न त्विति । बोधनार्थम्**—तीरादिबोधनार्थम् । शब्देनापे[1]क्ष्यत इत्यन्वयः । यथोक्तं सुधायाम्—न शब्देनापेक्ष्यते नापि प्रयोक्त्रा किंतु प्रतिपत्त्रैवेत्यादिना । अपे[2]क्ष्यत इत्यत्र सुधोक्तमेव हेतुमाह—**अनुपपत्तीति** । न केवलमुत्तरकालीनत्वात्तदनपेक्षा किंत्वन्यत्रोपक्षीणत्वेन सर्वथा तदपेक्षाभावाच्चेत्याह—**तस्येति** ॥

तृतीयमभ्युपेत्य तदपेक्षायाः सुधोक्तदिशान्यत्रोपयोगमाह—**किं त्विति** । मुख्यार्थबाधरूपहेतुं निरस्य प्रयोजनादित्युक्तहेतुं च

[1] क्षते—**नं.** क्षित-**उ.** [2] क्षते—**नं.** क्षित—**उ.**

पेक्ष्यते। प्रयोजनमपि न शब्देनापेक्ष्यते। अचेतनत्वात्। प्रयोजनस्य बोध[1]कार्यत्वेन बोधाहेतुत्वाच्च। किं तु सति मुख्ये स्वायत्ते च शब्दप्रयोगे कस्मादमुख्यं प्रयोक्तव्यमिति वक्त्रा श्रोत्रा वानुसन्धीयत इति प्रतिपादकत्वरूपायां वृत्तावनुव्याख्यानोक्तोनुगतः सम्बन्ध एव हेतुः। अनुपपत्तिस्त्वमुख्यार्थे तात्पर्यज्ञानहेतुः॥

यद्यपि प्रतिपादकत्वमेव तात्पर्यम्। तथापि सम्बन्धस्तत्स्वरूपे हेतुः। अन्वयानुपपत्तिस्तु तज्ज्ञप्ताविति विवेकः॥

---

सुधोक्तदिशा निराह—**प्रयोजनमपीति**। **अनुव्याख्यानेति**॥

'प्रयोगयुक्तसादृश्यं [2]सम्बन्धो वाप्यमुख्यत'।

इत्यनुव्याख्यानोक्त इत्यर्थः। **सम्बन्ध एवेति**। तद्योगपदोक्तशक्यसम्बन्ध एवेत्यर्थः। कुतस्तर्हि मुख्यार्थानुपपत्तिर्मृग्यत इत्यतः सुधोक्तंसमाधिमाह—**अनुपपत्तिस्त्विति**। मुख्यार्थान्वयानुपपत्तिरित्यर्थः॥

ननु—'वाचकत्वं हि तात्पर्यं यदर्था अखिला रवाः'। इति ज्ञानपादीयानुव्याख्याने 'न च वाचनिकस्तात्पर्यार्थ इति विशेषः। तन्मानाभावादि'ति कर्मनिर्णये 'तात्पर्यवृत्तिर्नातिरिच्यत' इत्यानुमानिकपादीयसुधाद्युक्त्या, चोक्तवृत्तिव्यतिरिक्ततात्पर्यवृत्तेरभावात् तात्पर्यज्ञानहेतुत्वोक्त्यैवोक्तलक्षणावृत्तिहेतुत्वं प्राप्तं[3] तथा च सम्बन्ध एव हेतुर्नत्वनुपपत्तिरित्ययुक्तमित्याशङ्कामनूद्य निराह—**यद्यपीति**। वेदापौरुषे-

---

[1] धनार्थत्वे–रा. धकका–सु. [2] श्यस–नं. उ. [3] अनन्तरं 'इत्याशङ्का' मित्याद्येवास्ति–ए.

केचित्तु—छत्रिणो गच्छन्ति, यष्टीः प्रवेशय, काकेभ्यो दधि रक्ष्यतां, इत्यादावन्वयानुपपत्तेरभावात्तात्पर्यानुपपत्तिरेव हेतुरित्याहुः । तन्न । अपौरुषेयवेदानुगतं तात्पर्यं तत्प्रमितिशेषत्वरूपतत्प्रतिपादकत्वातिरिक्तं नास्तीत्युक्तत्वेनात्माश्रयात् । अन्वयानुपपत्तिमज्ञात्वा तात्पर्यानुपपत्तेर्दुर्बोधत्वेनान्वयस्य विषयतया तात्पर्यनिरूपकत्वेन चान्वयानुपपत्तेः प्रथमोपस्थितत्वाच्च ॥

---

यत्ववादोक्तदिशा तत्प्रमितिशेषत्वरूपं प्रतिपादकत्वमित्यर्थः । सम्बन्धः शक्यसम्बन्धः । तीरादिप्रतिपादकत्वं, शब्दस्य सम्पादयति । मुख्यार्थभूतप्रवाहघोषाद्यन्वयानुपपत्तिद्वारिस्तु प्रतिपादकत्वज्ञानहेतुरित्यर्थः । नचैवं तस्य प्रथमोपस्थितमुख्यार्थस्यागमात्रहेतुत्वेनेति पूर्वोक्तविरोधः । तस्यास्तद्वारा वृत्तिज्ञानहेतुत्वेनेत्यर्थकत्वेनाविरोधात् । इति संप्रदाय इति । मण्युपन्यस्तमतमनूद्य निराह—**केचित्त्विति । अभावादिति ।** [1]छात्रिणि गमनान्वयस्य यष्टिषु प्रवेशान्वयस्य काकेषु-रक्षणाव[2]धित्वान्वयस्य सम्भवादिति भावः । **उक्तत्वेनेति ।** वेदापौरुषेयत्ववादे उक्तत्वेन प्रतिपादकत्वानुपपत्त्या प्रतिपादकत्वरूपवृत्तिकल्पनमित्यात्माश्रयादित्यर्थः ॥

मण्युक्तदोषं चाह—**अन्वयेति ।** प्रवाहे घोषान्वयानुपपत्तिमज्ञात्वा गङ्गायांघोष इति प्रयोक्तुराप्तस्य प्रवाहे तात्पर्यानुपपत्तेर्ज्ञातुमशक्यत्वादित्यर्थः । **विषयतयेति ।** अन्वयो हि शाब्दज्ञानविषयः ।

---

[1] पुरुषेषु—नं. छत्रिषु-उ. [2] णावधि—नं. ए.

न चाव्याप्तिः। प्रकरणादिना गच्छन्तीत्यस्यै-क[1]सार्थवाहित्वेन छत्रयच्छत्रिगमनमर्थः, प्रवेशये-त्यत्र[2]भोजनप्रयोजन[3]प्रवेशनमर्थः, रक्ष्यतामित्यस्य च दध्युपघातकमात्राद्रक्षणमर्थः, इत्यवगतत्वेन तत्राप्यन्वयानुपपत्तेः सत्त्वात् ॥

ननु -- लक्षणायामन्वयानुपपत्तिवदयोग्यत्वनै-राकाङ्क्ष्ये अपि स्त इति ते बीजे कस्मान्न स्याताम्। घोषस्य निबिडाधाराकाङ्क्षिणः प्रवाहे

तात्पर्यं च तत्परंप्रधानप्रतिपाद्यं यस्य तस्य भावस्तात्पर्यमिति व्युत्पत्त्या-न्वयनिरूप्यत्वात्तात्पर्यानुपपत्तिं ज्ञातुं पूर्वमेवान्वयानुपपत्तेर्ज्ञातव्यत्वादिति भावः ॥

प्रागुक्तदोषं मण्युक्तदिशोद्धरति—न चाव्याप्तिरिति। छत्रि-णो गच्छन्तीत्यादावन्वयानुपपत्त्यभावदोषो नेत्यर्थः। प्रकरणादिनेत्या-दिपदेन प्रत्यक्षादिमानान्तरग्रहः। सार्थः समूहः। छत्र्यछत्रिसमूहक[2]-त्वेनेत्यर्थः। तत्राप्यन्वयानुपपत्तेरिति। छत्रिणि सार्थवाहिगमना-न्वयस्य यष्टिषु भोजनार्थप्रवेशान्वयस्य, काकेषु यावद्दध्युपघातकावधिक-रक्षणान्वयस्य चानुपपत्तेः सत्त्वादित्यर्थः ॥

अन्वयानुपपत्तिरेव लक्षणाङ्गसौ हेतुरित्युक्तमयुक्तमिति भावेन मण्युक्तचोद्यमेवानूद्य निराह—नन्वित्यादिना। प्रवाहस्य घोषा-न्वये प्रवाहनिष्ठात्यन्ताभावप्रतियोगोगित्वप्रमाविशेष्यत्वादिरूपायोग्यता व्यक्तेति तामुपेक्ष्य नैराकाङ्क्ष्यं व्यनक्ति—घोषस्येति। किं मिळितं

[1] पदार्थसाहित्येन–सु. ग.　[2] त्यस्य भो–रा. सु. ग.　[3] नकप्र–सु.ग.
[4] हृकर्तृत्वे–नं.　हकर्तृकार्थकत्वे–ए. उ.

नैराकाङ्क्ष्यादिति चेन्न । नोभयं निमित्तम् । अन्यतरज्ञानेपि लक्षणादर्शनात् । नाप्येकैकमननुगमात् । अन्वयानुपपत्तिव्याप्यत्वेन चानुगमेऽन्वयानुपपत्तेरेव तद्बीजत्वात् ॥

एतेन—यथा[1] गङ्गायामित्यादावन्वयानुपपत्तिः छत्रिण इत्यादौ तु तात्पर्यानुपपत्तिरेवं क्वचिदयोग्यत्वं क्वचिन्नैराकाङ्क्ष्यं बीजमस्तु । न चाननुगमः । अनुपपत्तेर्ज्ञापकत्वेन वह्नौ धूमालोकादेरिवाननुगमेप्यदोषात् । यदि छत्रिण इत्यादावन्वयानुपपत्तिः कल्प्यते तर्हि गङ्गायामित्यादौ तात्पर्यानुपपत्तिः कल्प्यताम् । इति निरस्तम् । ज्ञापकेप्यनुगमसंभवे त्यागायोगात् । अन्वयानुपपत्तेः प्रथमोपस्थितत्वाच्च ॥

अत एवानुव्याख्याने पूर्वस्यान्वितस्य मुख्या-

---

द्वयं निमित्तं प्रत्येकं वेति कल्पौ क्रमेण निराह--**नोभयमिति** । **अन्वयानुपपत्तीति** । अन्वयाभावव्याप्यत्वेनेत्यर्थः । **अनुपपत्तेरिति** । अमुख्यार्थप्रतिपादकत्वज्ञापकत्वेनेत्यर्थः । तत्र दृष्टान्तः । **धूमेत्यादि** । **कल्प्यत इति** । प्रागुक्तदिशेति भावः । 'पूर्वायोगे परग्रह' इति पूर्वोदाहृतश्लोके शेषस्यार्थमाह---**पूर्वस्येति** । स्वोक्तिसंवादायोक्तं—**अन्वितस्येति** । [2] लक्षितलक्षणै[3]वनेतिकेचित् । मुख्यार्थबाध इत्युक्त-

---

[1] योगमित्याधिकम्--**रा. ग.** [2] स्वोक्तीत्यादिनास्ति-**नं. उ.** [3] णैव चेति भावेन सुधोक्तमेवाह–**अत्रेति**–**नं. उ. ए.**

र्थस्यायोग इति सुधायामपि मुख्यार्थानुपपत्ति-दर्शनमित्युक्तम्। अत्र मुख्यायोग इति वक्तव्ये यत्पूर्वायोग इत्युक्तं तल्लक्षितलक्षणासंग्रहार्थम्। तत्र लक्ष्यानुपपत्तेरपि हेतुत्वात् ॥

लक्षणादिहेतूक्तिः ॥ ६५ ॥

## अथ लक्षणादेरभिधातो भेदसमर्थनम् ॥ ६६ ॥

ननु गङ्गाशब्दस्य पूर इव तीरेपि, सिंहशब्दस्य च सिंह इव माणवकेपि शब्दान्तरे क्लृप्ता शक्ति-

त्वात्। अन्यथा मुख्यामुख्यार्थबाध इत्युच्येतेति। तदसदिति भावेन-सुधोक्तमेवाह—अत्रेति। अनुव्याख्यानशेषे ॥

लक्षणादिहेतूक्तिः ॥ ६५ ॥

### अथ लक्षणादेरभिधातो भेदसमर्थनम् ॥ ६६ ॥

पूर्वायोगे परग्रह इत्यस्य सुधोक्तदिशा अमुख्यवृत्तिसत्त्वोपपा-दनपरत्वरूपमर्थान्तरं मत्वा सुधोक्तिं साधयिष्यन्नाक्षिपति—**नन्विति**। यद्यप्येतन्मणिकृतैव लक्षणावादे आशङ्क्य निरस्तम्। तथापि तदुक्त-युक्तिमरोचमानो व्युत्पादनार्थमाधिकयुक्तिविवक्षार्थं च पुनरत्रोपक्षिप्त-वानित्यदोषः। **शब्दान्तर इति**। तीर[1]माणवकादिशब्दान्तरे[2] नानार्थकाक्षादिशब्दान्तर इति[3] वार्थः ॥

[1] तीरपदं न—उ. [2] रे नाना—उ. [3] ति चा—उ.

रेवास्तु । किं लक्षणाकल्पनेनेत्यक्षादिशब्दवन्नानार्थतैवेति चेन्न । तीरादिशक्तौ प्रमाणस्य [1] मध्यमवृद्धव्यवहारदर्शनादेरभावेप्यनुसंहितलक्षणान्यायस्य पुंसो गङ्गादिशब्देन तीरादिप्रतीतेः ॥

न च घोषादिपदसमभिव्याहार एव तत्र प्रमाणमिति वाच्यम् । इन्द्रियस्य रूपादिनेव गङ्गाशब्दस्य तीरेण क्लृप्तात्परंपरासंबन्धादेव बोधकत्वोपपत्तौ समभिव्याहारस्य साक्षात्संबन्धरूपशक्त्यकल्पकत्वात् । अन्यस्मिन् [2] शब्दे क्लृप्तादपि स्वस्मिन्क्लृप्तस्यान्तरङ्गत्वात् । अक्षादि-

तर्ह्यनेकार्थत्वं गङ्गादिशब्दस्य स्यादित्यतोस्तु तदित्याह— **अक्षादीति । मध्यमेति** । तद्व्यवहारस्यैव शक्तिग्राहकत्वादिति भावः । दर्शनादेरित्यादिपदेन प्रागुक्तव्याकरणोपमानकोशादिग्रहः। **अनुसंहितेति**। लक्षणास्थले यो न्यायो मुख्यार्थबाधादिस्तदनुसंधानवतः पुंस इत्यर्थः ॥

ननूक्तस्थले गङ्गापदात्तीरधीर्घोषपदसमभिव्याहारादेव पदान्तरसमभिव्याहारेण पदाज्जायमानार्थधीश्च शक्त्यैवेत्याशङ्क्य निराह— **न चेति** । न तु लक्षणान्यायानुसन्धानमित्येवकारार्थः । **इन्द्रियस्य रूपादिनेवेति** । संयुक्तसमवायरूपपरंपरासंबन्धाद्यथा बोधकत्वं तथा शक्यसंबन्धरूपक्लृप्तपरंपरासंबन्धादेव बोधकत्वोपपत्ताविन्यर्थः ॥

शब्दान्तरे क्लृप्तशक्तिरेवास्त्वित्युक्तस्योत्तरमाह — **अन्यस्मिन्निति** । स्वस्मिन् गङ्गाशब्द इत्यर्थः । शक्यसंबन्धस्य क्लृप्तत्वादिति भावः । अक्षादिशब्दवन्नानार्थतेत्युक्तं तन्निराह— **अक्षादीति** ।

[1] मध्यमपदं न—क. [2] अन्यत्र क्लृप्ता—क.

शब्दार्थास्तु नान्योन्यं संबद्धाः ॥

किं च तीराद्यनन्तैः सह क्लप्त[1]पूररूपैकशक्यसंबन्धेषु वृत्तित्वरूपधर्ममात्रकल्पनं लघु । तेष्वनन्ताः शब्दनिष्ठाः शक्तिरूपा[2] धर्मिणस्तद्ग्राहका वृद्धव्यवहारास्तद्ग्रहास्तत्स्मृतयश्चेत्यनेककल्पना गुर्वी ॥

मणौ तु तीराद्यनन्तेषु शक्यसंबन्ध[3]स्त्वेकः शक्तयस्त्वनन्ता इति लाघवमुक्तम् । तन्न । शक्यसंबन्धानामपि संयोगादित्वेनानन्तत्वात् ।

अन्योन्यसंबन्धत्वे हि प्रवाहसंबन्धतीरे गङ्गाशब्दस्येवाक्षादिशब्दस्यापि क्वचिच्छक्तिः तत्संबद्धे चार्थे लक्षणेति स्यात् न चैवमित्यर्थः । यद्यपि दिङ्नेत्रघृणिभूजलादीनामस्ति संयोगः संबन्धः । तथापि तत्र कस्य शक्तता कस्य शक्यसंबद्धतेति विनिगमकाभावात्सर्वस्य शक्ततैवेति भावः ॥

लाघवयुक्त्या च लक्षणैव युक्तेत्याह—**किंचेति** । [4]**पूररूपेति** । [5]पूरादिरूपेत्यर्थः । नद्यां घोष इत्यत्र पूरसंबन्धस्तीरे मञ्चाः क्रोशन्तीत्यत्र मञ्चसंबन्धः पुरुषे मार्गाश्चलन्तीत्यत्र मार्गसंबन्धः प्राणिष्वित्यादिरूपसंबन्धेष्वित्यर्थः । **तेष्विति** । तीरादिषु विषय[6] इत्यर्थः । **उक्तमिति** । लक्षणावाद उक्तमित्यर्थः । **संयोगादित्वेनेति** । यत्र गुण्यादिपदेन गुणादेर्लक्षणा तत्र लक्ष्येण सह संबन्धस्य समवायत्वेन[7] विषयेण विषयिणो लक्षणास्थले स्वरूपसंबन्धत्वेनेत्यादिरादिपदार्थः ॥

[1] प्ररू—क. ग. [2] पध—क. [3] न्ध ए—क. ग. [4] पूर्वरू—उ. पूरेति शोधितमस्ति—मु. पररू—नं. [5] पराादि—नं. उ. [6] येष्वित्य—उ. [7] यित्वे—उ. ए.

संबन्धत्वेनैक्ये तु शक्तित्वेनैक्यमिति समम् । प्रत्युत त्वन्मते ईश्वरेच्छारूपा शक्तिः स्वरूपेणै-वैका, शक्यसंबन्धास्तु स्वरूपेणैव नानेति विपरीतं लाघवम् ॥

किं च तीरमात्रशक्तावतिप्रसङ्गेन गङ्गातीरे शक्तेर्वक्तव्यतया नागृहीतविशेषणान्यायेन तीरार्थे प्रयोगेपि पूरशक्तिरावश्यकी ॥

अपि च गङ्गाशब्दस्यानेकार्थत्वेऽ[1]नुपपत्तिपुरस्सरं

---

प्रकारान्तरेण तीरादौ न शक्तिर्गङ्गादिपदस्येत्याह—**किं च तीरमात्रेति** । 'नागृहीतविशेषणा विशेष्येषु बुद्धिरुत्पद्यत' इति न्यायेन प्रथमोपस्थितत्वेन तत्र शक्तेरावश्यकत्वे सति शक्यसंबन्धादेव तीरधीसंभवान्न शक्तिकल्पनेति भावः ॥

ननु—यथा लक्षणापक्षे पूरेणोपलक्षणेन व्यावृत्ततीरविशेषस्या न्वयो न तीरान्तरस्य तथा पूरोपलक्षिततीरे शक्तिरस्तु न तु तीरे पूरे चेति (चेत् ।) गङ्गापदशक्तौ पूरस्य शक्यत्वेन विशेषणत्वे संभवति नोपलक्षणत्वं युक्तम् । विशेषणत्वासंभवे सत्येवोपलक्षणत्वात् । अतः पूर एव शक्तिः । किं च तीरशक्तावुपलक्षणत्वं पूरस्य न शक्यतावच्छे-दकत्वम् । नापि धेनुपदे गोत्वस्येव शक्त्युपाधित्वम् । गौरवादिति भावः ॥

लक्षणानभ्युपगतौ बाधकान्याह—**अपि चेति** । ननु—गोशब्दस्य नानार्थत्वेपि नास्ति संदेहजनकत्वमिति तद्वत्स्यादित्यत

---

[1] त्वे पूरा–**रा. ग.**

तीरधीर्न स्यात्। न ह्यक्षादिशब्देषु तथाधीः। गङ्गां पश्येत्यादौ तीरं पूरं वेति संदेहश्च स्यात्। अक्षा[1]न्यस्येत्यादौ तद्दर्शनात्। गां पश्येत्यादावपि सास्नादिमद्व्यक्तौ बाणादौ च शक्तिस्मृतावस्त्येव संदेहादिः॥

गङ्गां पश्येत्यादौ तु तीरे वृत्तिज्ञानेऽपि न संदेह इति विशेषः। अन्यथा शक्तिरूपसाक्षात्संबन्धमादाय परंपरासंबन्धरूपलक्षणापलापे; कुठारस्य काष्ठेन, व्रीह्यादिद्रव्यस्य यागेन, श्रोत्रस्य च शब्देन साक्षात्संबन्धो दृष्ट इति; हस्तस्य काष्ठेन द्रव्यसंस्कारस्य यागेन चक्षुषो घटरूपेण च स स्यात्। रूढिमादाय योगापलापश्च स्यात्। द्वारशब्दस्यैव द्वारविशिष्टापिधाने च शक्तिकल्पनेनाध्याहारश्च न सिध्येत्॥

---

आह[2]—**गंगां पश्येत्यादावपीति**। अन्यथेत्यस्यैव विवरणं **शक्तिरूपेत्यादि**। **व्रीह्यादिद्रव्यस्येत्यस्य**—पुरोडाशाज्यादिद्रव्यस्येत्यर्थः। तस्यैव साक्षाद्देवतोद्देशेन द्रव्यत्यागरूपयागान्वयात्। **हस्तस्येति**। कुठारादि[3]ग्राहिण इत्यर्थः। **द्रव्यसंस्कारस्येति**। प्रोक्षणविलापनादेः। **स इति**। साक्षात्संबन्धः। **योगेति**। अवयवशक्तिरूपयोगस्यावयवार्थद्वारा समुदायार्थबोधकत्वेन परंपरासंबन्धरूपत्वाद्रूढेः साक्षात्संबन्धत्वादिति भावः। योगापलापश्चेत्यनन्तरं कार्य इति शेषः। तेनादायेति साधु। **अध्याहारश्चेति**। पिधेहिपदाध्याहार इत्यर्थः॥

[1] न्यश्य-रा. ग. [2] ह-गांप-नं. उ. ए. 'गं' इति पूरितम्-मु. [3] ग्रा-नं. ए.

**ननु—रूढिरूपैकविशेषणानुसारिरीत्यैव न शब्दसामान्यवृत्तिनिर्णयः; किंतु सर्वविशेषानुसारिरीत्यैवेति चेत्समं प्रकृतेपि ॥**

**यद्यपि येन पुंसा गङ्गायां घोष इति तीर एव प्रथमप्रयोगो गृहीतः । तस्य तत्र शक्तिग्रहोस्ति ।**

---

रूढिमादाय योगापलापश्च स्यादित्युक्तदोषे परिहारमाशङ्कते—**नन्विति** । निर्णय इत्यनन्तरं येन योगापलापः स्यादिति योज्यम् । **सर्वविशेषेति** । साक्षात्संबन्धस्य वृत्तित्वकल्पनं रूढिरूपैकविशेषानुसारि तथा च शब्दसामान्यवृत्तिकल्पने घटादिशब्दनिष्ठरूढिरूपविशेषानुसारिरीतिरिव कुम्भकारादिशब्दनिष्ठपरंपरासंबन्धरूपयोगरूपविशेषानुसारिरीतिरप्यनुसर्तव्या । अन्यथा तत्र शब्दादर्थाप्रतीत्यापातात् । एवं च तद्रीत्या वृत्तिनिर्णये योगादिवृत्तिरावश्यकीति चेत् । तर्हि मुख्यवृत्तिरूपविशेषानुसारिरी[1]तेरिव मुख्यार्थधीपूर्वकप्रतीतिस्थलीयलक्षणादिविशेषानुसारिरीतेरप्यनुसर्तव्यत्वात् । तद्रीत्या लक्षणादिवृत्तिरभ्युपेयेति भावेनाह—**समं प्रकृत्येकेपीति** ॥

ननु—पूर इव तीरेपि गङ्गापदस्य व्युत्पत्तिग्रहे[2]णार्थप्रत्ययसाम्येऽपि कुतो न मुख्यता तीरे गङ्गाशब्दस्य। न च शक्तिग्रहो भ्रमः। तज्जन्यार्थप्रतीतेः संवादेन प्रमात्वानुभवादित्यत आह—**यद्यपीति** । यद्वा प्रागपि चेत्यादिनोक्तं पक्षं मणावन्येत्वित्यादिनानूद्य लक्षणायामव्युत्पन्नो बाह्य इत्यादिना तत्र दूषणं यदुक्तं तदनूद्य निराह—**यद्यपीत्यादिना** ॥

---

[1] रीतिरि–**नं. उ.** [2] हृणार्थ–**नं उ.**

तथापि तेन गङ्गायां मत्स्यः तीरे घोषः तीरं न गङ्गा इत्याद्युत्तरबहुप्रयोगदर्शनात्स[1]भ्रम एव। पूर्वं मम तीरधीस्तु असाधुशब्दादिव शक्तिभ्रमादिति निश्चीयते। तस्याः प्रमात्वमपि वह्निमति धूमभ्रमजन्याया अनुमितेरिव यादृच्छिकम् ॥

एतेन संबन्धसादृश्ययोस्तद्धितमुत्पाद्य तस्य लुप्य[2]भिधयैव सर्वं सेत्स्यति किममुख्यवृत्त्येति निरस्तम्। तथात्वे पूरानुपपत्तिपुरस्सरं तीरप्रतीत्यादेरयोगात्। न हि हरीतक्यादिशब्दा[3]द्वृक्षानुपपत्तिपुरःसरं फलधीः ॥

---

यत्तु सुधायां 'पूर्वायोगे परग्रहः' इत्यस्यार्थान्तरं[4] वक्तुं सादृश्यसंबन्धयोस्तद्धितमुत्पाद्य तस्यापि लुपि कृत इत्यादिना लक्षणादिवृत्त्यपलापचोद्यमनूद्य निरस्तं तन्निष्कृष्याह—**एतेनेति**। गङ्गासंबन्धीत्यर्थे सिंहसदृश इत्यर्थे च गङ्गादिशब्दात्तस्येदमिति सूत्रेण वा 'तद्धितार्थ' इति सूत्रेण वाण्प्रत्यये तस्य लुपि कृते 'लुपि युक्तवद्व्यक्तिवचन' इति सूत्रेण पूर्ववल्लिङ्गवचनयोः प्राप्तत्वेन गङ्गासंबन्धीत्यर्थे गङ्गायामितिशब्देन लक्षणां विनैव गङ्गासंबन्धितीरप्रतीतेः सिंहसदृशमाणवकप्रतीतेश्चोपपत्तेः। यथा हरीतक्यादिशब्दात्फलेर्थेऽण्प्रत्यये तस्य लुप्चेति सूत्रेण लुपि सति लुपियुक्तवद्व्यक्तिभावे हरीतकीति रूपम्। तद्वदिति भावः। लुपीत्यनन्तरं कृते सतीति शेषः। तेनोत्पाद्येति ल्यबन्तप्रयोगस्य साधुत्वं ज्ञेयम्। कचित्कृत इत्यपि पाठः ॥

---

[1] त्सत्त्वाद्भ्रम-**सु.** त्स तत्र-**क.** [2] पि कृतेभिधयै-**सु. क.** [3] ब्दे वृ-**क.** [4] 'वक्तुं' इति नास्ति-**उ.**

तस्माद्गङ्गा[1]शब्दस्य तीरादिशक्तौ प्रमाणाभावाद्गौरवात्पूरादिशक्तेरावश्यकत्वात्पूरानुपपत्तिपुरःसरमेव तीरादिबोधकत्वादसन्देहादतिप्रसङ्गाच्चेति हेतुषट्कान्न तीरादौ शक्तिः ॥

न च तीरशूर[2]शब्दाध्याहार एव तर्ह्यस्त्विति वाच्यम् । निराकाङ्क्षत्वात् । गङ्गासिंहशब्दयोर्वैयर्थ्या[3]च्च । अवैयर्थ्याय गङ्गायां मत्स्यस्तीरे घोष इत्याद्यध्याहारे च गौरवम् । प्रतीतैकवाक्यताभङ्गश्च ॥

द्वारमित्यादावध्याहार एव । न तु द्वारशब्दस्य पिधाने लक्षणा । साकाङ्क्षत्वात् । अवैयर्थ्याद्द्वारबोधकाभावाच्च । तद्बोधार्थं शब्दान्तराध्याहारे तु ———द्वारशब्दस्वारस्याविरोधिपिधेहि[4]शब्दाध्याहार एव युक्तः ॥

---

प्रागुपपादितदूषणषट्कं संग्रहेण बुद्ध्यारोहायानुवदन्नुपसंहरति– **तस्मादिति** । तस्य विवरणं गङ्गेत्यादि पञ्चम्यन्तषट्कम् ॥

प्रकारान्तरेण लक्षणाद्यमुख्यवृत्त्यपलापमाशङ्क्य निराह – **न च तीरेति** । घोष इत्यत्र तीर घोष इत्यन्वयाय तीरपदस्य, सिंहश्चैत्र इत्यत्र शूरश्चैत्र इत्यन्वयाय शूरपदस्य, अध्याहारः द्वारमित्यादाविव । अन्यथा तत्रापि लक्षणादि स्यादिति भावः ॥

---

[1] ङ्गादिश–**क.** [2] पूर–**क. सु.** [3] र्थ्यप्रसङ्गात्–**सु.** र्थ्यापातात्–**क.**
[4] हि पदा–**सु. ग.**

ननु—तथाप्यर्थापत्त्यैव तीरशूरधीरस्तु वक्तुराप्तेः प्रतीता[1]र्थानुपपत्तेश्च विरोधे[2]नार्थान्तरकल्पनादिति चेन्न। लक्षणाद्यकल्पनेऽबोधकं पदं प्रयुञ्जानस्याप्तत्वानिश्चयेनाप्तत्वरक्ष[3]णार्थमेव तत्कल्पनात् ॥

तदेतदभिप्रेत्योक्तमनुव्याख्याने 'पूर्वायोगे परग्रहः' इति ॥

अस्य चाक्षादिशब्दवन्नानार्थत्वपक्षे तद्धितलोपपक्षे पूर्वस्य प्रथमप्रतीतस्य[4] पूरस्यायोगे परस्य चरमप्रतीतस्य तीरस्य ग्रहः प्रत्ययो दृश्यते स न स्यात्। [5]इति। अध्याहारपक्षे पूर्वस्य क्लृप्तस्य पदस्यायोगेऽभावे परस्य कल्प्यस्याध्याहार्यस्य पदस्य ग्रहो[6] द्वारमित्यादौ ॥

अत्र तु गङ्गापदं विद्यत इति अर्थापत्तिपक्षे पूर्वस्य प्रथमप्रतीतस्यायोगेऽनुपपत्तौ प्राप्तायां पर-

---

यदपि सुधायां 'नन्वत्रानुपपत्तेरर्थप्रतीतिहेतुत्वे अर्थापत्तिरेवास्त्वि'त्यादिना लक्षणाद्यपलापचोद्यं प्रकारान्तरेणानूद्य समाहितं, तन्निष्कृष्य दर्शयति—**ननु तथापीति** ॥

प्रागुक्तपक्षचतुष्टये उक्तदोषाणां मूलारूढतां व्यनक्ति—**अस्य चेति**। अनुव्याख्यानशेषस्ये[7]त्यर्थः। इत्यर्थ इत्यनेनान्वयः। स न

---

[1] अर्थपदं न–**क.** [2] धिनो–**क.** [3] क्षार्थ–**रा. सु. ग.** [4] रूपस्या–**रा. ग.** [5] 'इति' इति नास्ति–**सु.** [6] हो भवति–**सु. ग.** हो भवतीति–**क.** [7] स्य चेत्य–**उ.**

स्यास्तन्निर्वाहिकायाः लक्षणायाः ग्रहः स्वीकार इत्यर्थः । तस्माद्गङ्गाशब्दादेस्तीरादौ लक्षणादिरेव न शक्तिः ॥

ननु शब्दस्यार्थे शक्तिर्नाम तज्ज्ञानजनकत्वम्। तच्च गङ्गाशब्दादेस्तीरादाव[1]स्तीति चेन्न। अत्र शक्तिशब्देन जनकत्वप्रयोजकस्य शब्दस्यार्थेन सह साक्षात्संबन्धस्याभिप्रेतत्वात् । उक्तं ह्यनु-व्याख्याने—

नित्ययोगेपि शब्दानामर्थेनैव निवार्यते ।

इति ॥

लक्षणादेरभिधातो भेदसमर्थनम् ॥ ६६ ॥

## अथ लाक्षणिकादेरनुभावकत्वसमर्थनम् ॥ ६७ ॥

यत्तु मणावुक्तम्—

वाचकमेवानुभावकम् । लाक्षणिकादिकं तु

स्यादितीत्यत्र विद्यत इतीत्यत्र चार्थपदं योज्यम् । नानार्थत्वपक्षे गङ्गा-दिपदस्येति योज्यम् । मण्यादिरीत्या शङ्कते — **ननु शब्दस्येति** । **उक्तं हीति** । आनुमानिकपादे ॥

लक्षणादेरभिधातो भेदसमर्थनम् ॥ ६६ ॥

अथ लाक्षणिकादेरनुभावकत्वसमर्थनम् ॥ ६७ ॥

**मणावुक्तमिति** । लक्षणावादे । **वाचकमिति** । गङ्गायां घोषः

[1] स्त्येवेति-सु.

स्मारकमेव । शक्तत्वस्यैवानुभावकत्वे तन्त्रत्वात् । न च सम्बन्धमात्रं तत्र तन्त्रम् लाघवादिति वाच्यम् । घटशब्दस्यापि कार्यकारणसम्बन्धेनाकाशानुभावकत्वापातात् ॥

नापि वृत्तिमात्रं तन्त्रम्। वृत्तित्वं हि शाब्दानुभवानुकूलपदपदार्थसंबन्धत्वम् । तथा च शाब्दानुभवानुकूलत्वे ज्ञाते तद्घटितवृत्तित्वज्ञानम्, वृत्तित्वे च ज्ञाते तदवच्छेदेन शाब्दानुभवानुकूलत्वज्ञानम्, इत्यन्योन्याश्रयात् ॥

तीरस्यानुभवस्तु गङ्गापदस्मारिततीरान्वितघोषानुभावकेन घोषपदेनैव । एतेन लाक्षणिकमेवानुभावकं न तु वाच[1]निकमिति वैपरीत्यशङ्कानिरस्ता । सर्वत्र वाक्ये शक्तपदनियमवल्लाक्षणिकपदनियमाभावेन शक्ते[2] अनुभावकताया आवश्यकत्वादिति । तन्न ॥

पदं न स्मारकमित्युक्तत्वेन गङ्गापदस्यानु-

---

सिंहश्चैत्र इत्यादौ गङ्गादिपदं घोषादिपदार्थान्विततीरादिरूपस्वार्थानुभावकं नेत्यर्थः । केन तर्हि घोषाद्यन्विततीराद्यनुभव इत्य[3]त आह— **तीरस्येति** । एतेनेत्युक्तं व्यनक्ति—**सर्वत्रेति** । **पदमिति** । वाक्यस्थं पदं न पदार्थस्मारकमिति भट्टाभिमताभिहितान्वयभङ्गे उक्त-

---

[1] चकमि–रा. सु.　[2] क्तेरनु–सु. क.　[3] त्युक्त आ–उ.

**भावकता[1]यामबोधकत्वापातात् । लक्षणादेरनुभावकत्वातन्त्रत्वे स्मारकमात्रस्य कार्यकारणसम्बन्धस्येवावृत्तित्वप्रसङ्गाच्च ॥**

**न च शाब्दानुभवानुकूलस्मृतिहेतुत्वमात्रेण वृत्तित्वमिति वाच्यम् । उक्तस्मृतिहेतुत्वेपि वृत्तित्वादेस्तन्त्रत्वेऽन्योन्याश्रयादिप्रसङ्गेन शक्तत्वमेव तन्त्रमिति सुवचत्वात्साक्षात्परंपरासाधारणशक्ति[2]संबन्धित्वं वृत्तित्वमिति निरुक्तौ चान्योन्या-**

त्वेनेत्यर्थः । **अबोधकत्वेति ।** स्मृत्यनुभवान्यबोधाभावादिति भावः ॥ **अवृत्तित्वप्रसङ्गाच्चेति ।** अन्यथा घटादिशब्दस्यापि त्वन्मते कार्यकारणसम्बन्धेनाकाशस्मारकत्वादाकाशे वृत्तिमत्त्वप्रसङ्गादिति भावः । **हेतुत्वमात्रेणेति ।** लक्षणादेरित्यनुकर्षः । **उक्तस्मृतिहेतुत्वेपीति ।** शाब्दानुभवानुकूलस्मृतिहेतुत्वेपि । लक्षणादेरित्यनुषङ्गः । तस्येति शेषः । उक्तरूपस्मृतिहेतुत्वस्य वृत्तित्वलक्षणात्वगौणीवृत्तित्वतंत्रत्वे सति शाब्दानुभवानुकूलत्वे ज्ञाते तद्घटितवृत्तित्वज्ञानं वृत्तित्वे च ज्ञाते तदवच्छेदेन शाब्दानुभवानुकूलत्वज्ञानमिति प्रागुक्तान्योन्याश्रयप्रसङ्गेनादिपदोक्तेन तस्यैव वृत्तित्वे स्वज्ञाने स्वज्ञानापेक्षेत्यात्माश्रयप्रसङ्गेन चेत्यर्थः । तन्त्रमित्युपलक्षणम् । शक्तत्वमेवोक्तरूपस्मृतिहेतुत्वामिति सुवचत्वादित्यपि ध्येयम् ॥

का तर्हि वृत्तित्वनिरुक्तिर्निर्दोषा लक्षणादिसाधारणी । यद्वृत्तित्वमनु[3]भावकतायां तन्त्रं स्यादित्यत आह—**साक्षादिति । परंपरेति ।**

[1] तया–**रा. ग.** [2] क्तिरूपसं–**रा. सु. क.** [3] मेवानुभा–**ए.**

श्रयाभावात् । गङ्गाशब्दस्य च तीरे परंपराशक्तिसंबन्धस्य सत्त्वात् । साक्षात्वेन विशेषणे[1] गौरवात् । गङ्गापदात्स्मराम्येव घोषपदात्त्वनुभवाम्यपीत्यननुव्यवसायेन घोषान्विततीरानुभवार्थं गङ्गापदेऽप्यनुभावकत्वस्यावश्यकत्वाच्च ॥

अन्यथा गामानयेत्यत्रापि एकमनुभावकं न स्यात् । श्रुतमेवानुभावकं न त्वध्याहृतम् रूढमेवानुभावकं न तु यौगिकमिति च स्यात् ॥

अत एव लक्षणादिस्थलेपि शक्तेरेव परंपरयापि व्यापारादेवानुव्याख्याने लक्षणादिसाधारणतात्पर्य

---

शक्यार्थद्वारको वा लक्ष्यार्थद्वारको वा परंपरासंबन्धो ध्येयः । तथाच लक्षितलक्षणायां नाव्याप्तिः । **शक्तिसम्बन्धित्वं** । शक्तिरूपसम्बन्धवत्त्वमित्यर्थः । गङ्गायां घोष इत्यादावव्याप्तिरित्यत आह—**गङ्गेति** । लक्षितलक्षणायामपि न दोष इत्यपि ध्येयम् ॥

ननु — साक्षाच्छक्तिरूपसंबन्धवत्त्वमेवानुभावकतायां तन्त्रभूतं वृत्तित्वम् । एवं च लक्षणादेर्न तादृशवृत्तित्वप्रसङ्ग इत्यत आह—**साक्षात्वेनेति** । कुत एवं निर्बन्ध इत्यत आह—**गङ्गेति** । विपक्षे बाधकानि चाह -**अन्यथेति** । अनुव्यवसायाभावेपि स्मारकत्वमात्रकल्पन इत्यर्थः ॥

स्वोक्तनिरुक्तौ संवादमाह—**अत एवेति** । तस्यैव विवरण[2] लक्षणादिस्थल इत्यादि[3] । **अनुव्याख्यान इति** । ज्ञानपादीयानुव्याख्यान

---

[1] च गौ—**सु. क.**  [2] णमाह—लक्ष—**ए.**  [3] दिना -**ए**

निरुक्तौ वाचकत्वं हि तात्पर्यमित्युक्तम् । सुधायामपि लक्षणामधिकृत्यावश्यं शक्तिराश्रयणीयेत्युक्तम् ॥

केचित्तु–गङ्गापदस्याननुभावकत्वे व्युत्पत्तिसिद्धं घोषपदेन सह संभूय कारित्वं न स्यात् । अनुभवे गङ्गापदस्याव्यापारात् । स्मृतौ च पदानामन्यनैरपेक्ष्यादित्याहुः । तन्न । प्रोक्षणादीनां व्रीह्यादिद्वारा याग इव गङ्गापदस्यापि स्मृतिद्वारा गङ्गान्वितघोषानुभवे व्यापारेण संभूयकारित्वसंभवात् ॥

लाक्षणिका[1]देर[2]नुभावकत्वसमर्थनम् ॥ ६७ ॥

---

इत्यर्थः । **सुधायामपीति** । 'पूर्वायोगे परग्रह' इत्यानुमानिकपादीयानुव्याख्यानसुधायाम् । लक्षणाद्यमुख्यवृत्तिर्नोपेया सादृश्यसंबन्धयोस्तद्धितोत्पत्त्यैव सर्वनिर्वाहादर्थापत्तिरेव वा गङ्गायां घोष इत्यादावस्त्वित्याशङ्क्य तत्र दूषणानुक्त्वोपसंह्रियते अवश्यं शक्तिराश्रयणीयेति । तत्र लक्षणादिवृत्तिरवश्यमाश्रयणीयेत्युपसंहर्तव्ये शक्तिरित्युपसंहारोत्र प्रागुक्ताभिप्रायक एव । अन्यथासङ्गतः स्यादिति भावः । समाध्यन्तरं नादरणीयमिति भावेन तदनूद्य निराह—**केचित्त्विति** ॥

लाक्षणिका[1]देर[2]नुभावकत्वसमर्थनम् ॥ ६७ ॥

---

[1] कत्वादे–उ. [2] रानुभाविकत्व–ए.

## अथ लाक्षणिकादेः शक्यसम्बन्धित्वादिनैव लक्ष्याद्युपस्थापकत्वसमर्थनम् ॥६८॥

यच्चोक्तं मणौ—गङ्गाशब्देन वस्तुगत्या यद्गङ्गासंबन्धि तीरं तदेव तीरत्वेनोपस्थाप्यते। न तु गङ्गासंबन्धित्वेन। युगपद्वृत्तिद्वयविरोधात्। गङ्गासंबन्धे गङ्गासंबन्धाभावाच्चेति। तन्न। गङ्गायां घोषो मत्स्यश्चेत्यादौ युगपद्वृत्तिद्वयदर्शनात्। छत्रिणो गच्छन्तीत्यत्र छत्रच्छात्रिसमुदायस्येवेहापि

---

## अथ लाक्षणिकादेः शक्यसम्बन्धित्वादिनैव लक्ष्याद्युपस्थापकत्वसमर्थनम् ॥ ६८ ॥

**यच्चोक्तमिति** । लक्षणावाद एव । लक्षणया तीरत्वेनो-[1]पस्थितौ तीरान्तरेऽन्वयोऽपि स्यात् । गङ्गातीरत्वेनोपस्थितौ युगपद्वृत्तिद्वयविरोधः । गङ्गोपस्थितेः शक्तिसाध्यत्वादित्याशङ्कयोक्त[2]मित्यर्थः । **गङ्गासंबन्धित्वेनेति**। गङ्गासंबन्धितीरत्वेनेत्यर्थः। **वृत्तिद्वयेति**। शक्त्या पूरस्य लक्षणया तीरस्य चोपस्थाप्यत्वादिति भावः—**गङ्गेति**। पूरे शक्तस्य गङ्गापदस्य पूरसंबन्धोपस्थापने तत्र शक्तेरभावेन पूरसंबन्धरूपशक्यसंबन्धद्वारकलक्षणावृत्तेरेव वाच्यत्वात्पूरसंबन्धे च पूरसंबन्धाभावाच्च न तदुपस्थापकमित्यर्थः ॥

[3]तन्त्रावृत्तिं मन्वानं प्रत्याह—**छत्रिण इति** । उक्तं च पक्षधरेपि । न च वृत्तिद्वयविरोधः गङ्गाया अपि लक्षणयैवोपस्थितेरित्यादि ।

---

[1] त्वोप—उ. [2] क्तं नि—उ. [3] तन्त्रावृ—उ. ए. तन्त्र वृ—नं.

गङ्गासंबन्धितीरस्य लक्षणयैवोपस्थितेश्च । गङ्गायास्तीरेण सह संयोगस्येव संयोगरूपेण स्वसंबन्धेन सह[1] समवायरूपसंबन्धस्य सत्त्वाच्च ॥

ननु—यथा पदहस्तिनोर्ज्ञानात्पदार्थहस्तिपयोः स्मृतिर्न पदहस्तिविषया । तथा गङ्गा[2]ज्ञानात्तीरस्मृतिर्न स्मारकगङ्गा[3]विषयेति कथं तत्संबन्धविषयेति चेन्न । पदं न स्मारकमित्युक्तत्वात् । अनुभवश्च न तीरत्वेनैव । किंतु गङ्गासंबन्धितीरत्वेन । अन्यथा वक्त्रभिप्रेतस्य पावित्र्यादेरसिद्धेः । श्रोतुश्च गङ्गातीर एव प्रवृत्त्याद्यनुपपत्तेश्च ॥

न च लक्षणास्थले गङ्गासंबन्धस्य सन्निकर्षत्वाच्चक्षुर्घटसंयोगवद्वृत्तित्वाच्च शक्तिवन्न तज्जन्यधीविषयत्वमिति वाच्यम् । रूपी घट इत्यत्र सन्निकर्षकोटेरपि समवायस्य गौणी[4]स्थले वृत्ते-

गङ्गासंबन्धे गङ्गासंबन्धाभावाच्चेत्युक्तदोषं निराह—**गङ्गाया इति** । मण्युक्तमेवाशङ्कते—**नन्विति** । गङ्गासंबन्धित्वेनोपस्थितिर्नेत्यत्रानुभवविरोधश्चेति भावेनाह—**अनुभवश्चेति** । अन्यथेत्येतच्छ्रोतुश्चेत्यत्राप्यन्वेति । प्रकारान्तरेण गङ्गासंबन्धित्वेनानुपस्थितिमाशङ्क्य निराह—**न च लक्षणास्थल इति** । सन्निक[5]र्षत्वाद्वृत्तित्वाच्चेत्युक्तहेतुद्वयस्य क्रमेण व्यभिचारमाह—**सन्निकर्षकोटेरिति** । **समवायस्येति** ।

[1] संयोगस्येव संयोगरूपेण स्वसंबन्धेन सह-**रा.** [2] ज्ञापदात्ती-**सु. क.** [3] पदादिवि-**क.** [4] णस्य-**रा. सु. क. ग.** [5] र्षाद्य-**नं. उ.**

रपि सादृश्यस्य च तज्जन्यधीविषयत्वदर्शनात् । लक्षणायां [1]चाशक्यत्वेन सजातीयगौणीरीतिरेव युक्ता । न तु विजातीयाभिधारीतिः ॥

किंच संबन्धो न वृत्तिः । किंतु तद्धेतुरेव । घटत्वादिरपि घटादिशब्दवृत्तौ हेतुः ॥

एतेन शक्तिस्थले वृत्तिविषयतावच्छेदकस्य घटत्वादेरेव घटादिशब्दजन्यधीविषयत्वदर्शनादत्रापि गङ्गासंबन्धस्य शाब्दधीविषयत्वे वृत्तिविषयतावच्छेदकत्वं वाच्यम् । तच्चायुक्तम् । इह गङ्गासंबन्धस्यैव वृत्तित्वेन स्वस्य स्वविषयतावच्छेदकत्वायोगादिति निरस्तम् । संबन्धो न वृत्तिरित्युक्तत्वात् ॥

अन्यथा रूपीति विशिष्टज्ञानं न स्यात् । संबन्धाविषयकत्वात् । न चैकदेशस्य [2]भानेपि सन्निकर्षतापर्याप्त्यधिकरणस्य न तज्जन्यधीविषयत्वमिति वाच्यम् । हेत्वभावेनाप्रयोजकत्वात् । **वृत्तेरपि** । वृत्तिरूपस्यापीत्यर्थः । **सादृश्यस्य चेति**[3] । न केवलं समवायस्येति चार्थः । शक्तौ नोपलब्धेयं रीतिरित्यत आह—**लक्षणायां चेति** । वृत्तित्वादिति हेतोरसिद्धिरिति भावेनाह—**किंचेति** । एतच्च प्रागेव वृत्तिलक्षणोक्तिप्रस्तावे व्यक्तम् । वृत्तिहेतोः शाब्दधीविषयत्वं क्वोपलब्धमित्यतो घटत्वादावुपलब्धमिति[4] भावेनाह—**घटत्वादिरपीति** । **एतेनेति** । अवृत्तित्वकथनेनेत्यर्थः । **उक्तत्वादिति** । वृत्तिलक्षणोक्तिप्रस्तावे किंचेत्यादिपूर्वग्रन्थे चेत्यर्थः ॥

[1] वा मुख्यत्वेन-**रा. ग.** चामुख्यत्वेन-**सु. क.** [2] भावेपि-**न. उ. ए.**
[3] पदस्य चेति । न के-**उ.** [4] "वृत्तिरर्थप्रतिपादकामिति-" इत्यधिकम्-**ए.**

आकाशशब्दशक्तिविषयता[1]नवच्छेदकस्या[2]पि शब्दसमवायित्वस्येवेहापि वृत्तिविषयतानवच्छेदकस्यापि गङ्गासंबन्धस्य शाब्दधीविषयत्वोपपत्तेश्च ॥

किंच घटत्वादेर्घटादिपदजन्यज्ञाने प्रकारत्वानुभवाद्धि घटादिपदशक्तिविषयतावच्छेदकता कल्प्यते । कल्पकान्तराभावात् । इहापि गङ्गापदजन्यज्ञाने गङ्गासंबन्धित्वस्य प्रकारत्वं किं नानुभवसि । येन तस्य गङ्गापदवृत्तिविषयतावच्छेदकतां न कल्पयसि । तथात्वे तीरं गाङ्गमन्यद्वेति कदाचित्संदेहादि स्यात् ॥

न च स्वस्य स्वविषयतावच्छेदकत्वायोगः । तीरगतायाः पदनिष्ठवृत्तिविषयताया अवच्छेद्यत्वात् । तीरगतस्य गङ्गासंयोगस्य चावच्छेदकत्वात् ॥

---

ननु—न्यायमते आकाशशब्दस्याकाशे शक्तेरेवाभावेन वा ततोऽन्यस्याकाशरूपधर्मस्याभावेन वास्त्वगत्यात्र भानमिह तु नैवमित्यतोऽवच्छेदकत्वमेव सोपपत्तिकमाह—**किंचेति** । **तथात्व इति** । तीरस्य गङ्गासंबन्धित्वेनाननुभवे सतीत्यर्थः । स्वस्य स्वविषयतावच्छेदकत्वायोगादिति प्रागुक्तं निराह—**न चेति** । एवं संबन्धस्याभ्युपेत्यावच्छेदकत्वं शाब्द-

---

[1] ताव–**रा. ग.** [2] स्य शब्दसमवा–**सु. क.** स्यापि शब्द–**ग.**

मास्तु वावच्छेदकत्वम् । तथापि तीरधी-रूपफलबलेन लक्षणावद्गङ्गासंबन्धधीरूपफलबलेन गङ्गाशब्दतीरयोः संबन्धघटकसंबन्धत्वस्यैव लाक्षणिकशब्दजन्यधीविषयत्वे तन्त्रत्वं कल्प्यताम् ॥

यद्वा क्षीरमाधुर्ये क्षीरसंबन्धमनन्तर्भाव्यैव माधुर्यावान्तरविशेष इव गङ्गातीरेपि गङ्गासंबन्धमनन्तर्भाव्यैव गङ्गासंबन्धव्याप्य[1]संस्थानविशेषो वातिपूततीरत्वादिर्वा तीरान्तरव्यावृत्तोऽसाधारणधर्मो येनयेन पुंसा [2]प्रयोगेऽनुभूतस्तस्यतस्य सस वृत्तितज्जन्यज्ञानयोर्विषयतावच्छेदक इति न कोपि दोषः ॥

धीविषयत्वमुपपादितमिदानीमवच्छेदकत्वाभावेप्यन्यदेव शाब्दधीविषयत्वनियामकमस्त्वित्याह—**मास्त्वित्यादिना** । गङ्गाशब्दात्तीरधीरूपफलबलेन गङ्गाशब्दे लक्षणावृत्तिकल्पनवदित्यर्थः । **गङ्गासंबन्धधीरूपेति** । तद्धियः प्रागेवोपपादितत्वादिति भावः । **संबन्धेति** । गङ्गाशब्दतीरयोः परंपरारूपो हि संबन्धः शब्दस्य पूरेण शक्तिरूपः पूरस्य तीरेण संयोगः । तत्र गङ्गातीरयोः संयोगस्तदेकदेशभूतत्वात्तद्घटको भवतीति गङ्गाशब्दतीरयोः संबन्धघटकसंबन्धत्वस्यैवेत्युक्तम् । ननु संबन्धस्यानवच्छेदकत्वादन्यस्यावच्छेदकस्याभावात्कथं वृत्तिविषयताग्रह इत्यत आह—**यद्वेति** । **न कोपीति** । तीरान्तरेन्वयप्रसङ्गदोषो वा अवच्छेदकाभावदोषो वा, संबन्धस्यावच्छेदकत्वकल्पनादोषो वा नास्तीत्यर्थः ॥

[1] प्यः सं—**रा. सु. ग.**   [2] यो योनुभूतस्त—**रा. सु. क. ग.**

यद्वा लक्षकपदेन योयोर्थो भासते तावत्पर्यन्तः परंपरासंबन्धो लक्षणावृत्तिः। अत एव लक्षितलक्षणापि लक्षणैव। एवं च रूपसमवायी घट इत्यत्र यथा घटरूपसमवायैः सह संयोग[1]समवायस्वरूपाणि सन्निकर्षास्तथा तीरेण सह प्रवाहसंबन्धः संबन्धेन सह संबन्धसंबन्धो वृत्तिः। तद्विषयता च तीरे तीरत्वेनेव संबन्धे संबन्धत्वेनावच्छिद्यते ॥

न चानवस्था। तीरसंबन्धस्येव संबन्धसंबन्धस्याप्रती[2]त्या तस्य स्वरूपसत एव वृत्तित्वात्।

---

ननु—वृत्त्यविषयस्य सम्बन्धस्य संस्थानविशेषादेर्वा कथं शाब्दधीविषयतेत्यतो वृत्तिविषयत्वमपि तस्य तदनुगुणं लक्षणावृत्तिलक्षणोक्तिपूर्वमाह—**यद्वेति**। **अत एवेति**। प्रतीतिपर्यन्तपरंपरासंबन्धस्य लक्षणावृत्तित्वादेवेत्यर्थः। प्राग्विरुद्धा राजान इदानीमेकीभूता इत्यादिर्लक्षितलक्षणा। अन्यथा सा पृथग्वृत्तिः स्यादिति भावः ॥

अस्त्वेवं तावता गङ्गासंबन्धस्य कथं वृत्तिविषयतेत्यत आह—**एवं चेति**। **संयोगेति**। यथाक्रमं घटेन संयोगो रूपेण समवायः, समवायेन विशेषणतादिरूपस्वरूपसंबन्ध इत्यर्थः। **सन्निकर्षा इति**। चक्षुरादेरिति योज्यम्। तथेत्यनन्तरं शब्दस्येति शेषः। **प्रवाहसंबन्ध इति**। वृत्तिरित्यन्वयः। **सम्बन्धेनेति**। संयोगादिरूपप्रवाहतीरादिसंबन्धेन सह संबन्धसंबन्धः संयोगादिनिरूपितसमवायादिरित्यर्थः। **न चानवस्थेति**।

---

[1] संयुक्तत्यधिकम्—**स्**. गः संयुक्तसमवाय· संयुक्तसमवेतविशेषणतासान्निक—**क**. [2] तीतस्य—**स्**.

नहि रूपसमवायी[1] घट इत्यत्र समवायस्वरूपसबन्धोपि सबन्धान्तरेण संबद्धो भासते[2] ॥

तस्माद्वृत्तिद्वयविरोधः, संबन्धे संबन्धान्तराभावः, स्मारकस्य स्मार्यकोट्यप्रवेशनियमः, वृत्तेर्वृत्तिजन्यज्ञानाविषयत्वनियमः, वृत्तेरेव वृत्तिविषयत्वावच्छेदकत्वासंभव, इति बाधकपञ्चकस्योद्धृतत्वाद्गङ्गाशब्दो गङ्गातीरत्वेनैव ती[3]रार्थोपस्थापक इत्यस्य पञ्चधोपपादितत्वाच्च[4] न कश्चिद्दोषः ॥
अत एव—

"स्वातन्त्र्ये च विशिष्टत्वे स्थानमत्यैक्ययोरपि ।
सादृश्ये चैकवाक् सम्यक् सावकाशा यथेष्टतः" ॥

इत्यनुव्याख्याने लक्षणानिमित्तस्य स्वातन्त्र्यादेः संबन्धस्य गौणीनिमित्तस्य सादृशस्य चाभेदश्रुत्यर्थतोक्ता ॥

एतेनाखण्डे ब्रह्मणि वेदान्तानां लक्षणेत्यद्वैति-

---

संबन्धसंबन्धेनापि शब्दस्य संबन्धसंबन्धसंबन्धो वृत्तिरिति वाच्यम् । तत्राप्येवमित्यनवस्थेत्यर्थः । **न कश्चिद्दोष इति** । अतिप्रसङ्गादिति वृत्त्यविषयस्य कथं भानमिति दोषश्च नेत्यर्थः । पूर्वोक्तवृत्तिहेतोः शाब्दधीविषयत्वे ज्ञापकमाह—**अत एवेति** ॥

ननु वेदानां गुणान्विते भगवति शक्तिरित्युपपादनप्रस्तावे लक्षणादिवृत्तेर्लक्षणाद्युक्तेरुपयोगाप्रतीतेराह—**एतेनेति** । उक्तं चेक्षतिनये-

---

1 र्यीत्यत्र समवायः स्वरूपसंबन्धेनेव स्वरूपसं-**रा. सु. क. ग.** 2 इति इत्यधिकम्-**रा.** इति न कश्चिद्दोषः इत्यधिकम्-**सु.** 3 रोपस्था-**रा.क.** 4 तस्मादित्यारभ्य नास्ति-**रा** इति इत्यधिकम्-**सु. क. ग.**

**मतं निरस्तम्। लक्षकस्य शक्यसंबन्धित्वेनैवोपस्थापकत्वात्॥**

लाक्षणिकादेः शक्यसंबन्धित्वादिनैव लक्ष्याद्युपस्थापकत्वसमर्थनम्॥ ६८॥

## अथ स्वमते गौण्या लक्षणातो भेदप्रकारः॥ ६९॥

**अथ परशब्दस्य परत्र वृत्तित्वाविशेषात्कथं गौणी लक्षणातो भिन्ना। सादृश्यस्यापि सबन्धत्वात्। न हि संयोगादिरेव संबन्धो लक्षणा-**

---

"अमेयं चेन्न शास्त्रस्य तत्र वृत्तिः कथंचन"।

इत्येतद्व्याख्यावसरे सुधायां न हि तीरं स्वरूपतो गङ्गासंबन्धित्वेन च प्रमाणतोऽप्रतिपन्नो गङ्गाशब्देन तज्ज्ञाप्यत इत्यादीति भावः॥

लाक्षणिकादेः शक्यसंबन्धित्वादिनैव लक्ष्याद्युपस्थापकत्वसमर्थनम्॥ ६८॥

अथ स्वमते गौण्या लक्षणातो भेदप्रकारः॥ ६९॥

यत्तु सुधायां कश्चिदाह—गौणी नाम वृत्तिर्नास्तीत्यादिना लक्षणागौण्योरभेदमाशङ्क्य भेदसमर्थनं कृतं तद्विवृण्वानः प्रागुक्तामुख्यवृत्तिभेदं तावदाक्षिपति—**अथेति**। **परशब्दस्येति**। अन्यवाचकस्येत्यर्थः। संबन्धसादृश्यरूपनिमित्तभेदाद्भेद इत्यत आह—**सादृश्यस्यापीति**। संयोगसमवायादिरूपत्वाभावात्कथं संबन्धत्वमित्यत आह—**न हीति**। गङ्गायां घोष इत्यत्र संयोगः, यत्र गुणा-

बीजम् । किं तु विशिष्टधीनिर्वाहकं संबन्धमात्रम् । अस्ति चेहापीदमनेन सदृशमिति विशिष्टधीरिति-चेन्मैवम् ॥

यथाहीदमनेन संयुक्तमिति प्रतीत्या संयोगो विशेषणविशेष्ययोः संबन्धतया न सिध्यति, दण्डीत्यत्र दण्डस्येवेह संयोगस्यैव विशेषणत्वात्, किंतु संयोगस्य संयोगिना सह समवाय एव सिध्यति, तथोक्तप्रतीत्या सादृश्यस्य धर्म्यादिना सहान्यः संबन्धः सिध्यतु । सादृश्यस्य संबन्धत्वे किमायातम् ॥

न हि तन्निरूप्यत्वमेव तत्संबन्धत्वम् । दैर्घ्यादेरपि ह्रस्वादिसंबन्धत्वापातात् । किं तु त[1]न्निरूप्यत्वव्याप्यं तत् ॥

दिना गुण्यादिर्लक्ष्यते तत्र समवायः, विषयादिना विषयादिर्लक्ष्यते तत्र स्वरूपसंबन्ध इत्यननुगमापत्तेरिति भावः । **यथेति** । तथेत्यनेनान्वयः । **विशेषणविशेष्ययोरिति** । संयोगसंयोगिनोरित्यर्थः । **सिध्यतीति** । संबन्धतयेत्यनुषङ्गः । **उक्तप्रतीत्येति** । इदमनेन सदृशमिति प्रतीत्येत्यर्थः ॥

ननु——सादृश्यस्येदमनेनेत्युभयनिरूप्यत्वादुभयसंबन्धत्वमित्यत आह—**न हीति** । किंनाम संबन्धत्वमिति प्रश्नोत्तरमाह—**निरूप्यत्वव्याप्यमिति** ॥

[1] तत्संबन्धवत्त्वव्याप्य—**क.**

यदितु संबन्धान्तरं विना संयोगादिनैव चैत्रो दण्डी रूपी ज्ञातश्चेति धीवत्सादृश्येनैव सिंहवान्देवदत्त इति धीः स्यात् तदा सादृश्यस्य संबन्धत्वं सिध्येदपि । सातु नास्ति ॥

ननु—सादृश्यमात्रं निमित्तं चेदतिप्रसङ्गः । स्वसंबन्धिचेदावश्यकत्वात्संबन्ध एव निमित्तमस्त्विति चेन्न । संबन्धे स्वसंबन्धित्वस्यैव

---

ननु—सादृश्यस्य संबन्धत्वेन धीप्रकारः इदमनेन सदृशमित्युक्तरूपे प्रतीत्याकारव्यतिरेकेण नोपदर्शयितुं शक्य इतीयमेव संबन्धत्वप्रतीतिरित्यत आह—यदि त्विति । संयोगादिनैवेति । संयोगसमवायस्वरूपसंबन्धैर्यथाक्रमं दण्डीचैत्रः रूपीघटः ज्ञातो घटः इति धीवदित्यर्थः । सिध्येदपीत्यनास्थोक्तिः । तत्रापि गोमानित्यादिवत् संबन्धान्तरस्यापि संभवादिति भावः । अस्तु तथैव धिया संबन्धत्वसिद्धिरित्यत आह–सा त्विति । तथाच न संबन्धत्वं सादृश्यस्येतिभिन्ननिमित्तत्वाल्लक्षणागौण्योर्भेद इति भावः ॥

प्रकारान्तरेण गौण्या अपि संबन्धनिमित्तकत्वमाशङ्कते—नन्विति । अतिप्रसङ्ग इति । यत्किंचित्सादृश्यस्य सर्वत्र संभावत्सर्वस्य शब्दस्य गौण्या सर्वार्थप्रत्यायकत्वप्रसङ्ग इत्यर्थः—स्वसंबन्धीति । गौणशब्दवाच्यार्थसंबन्धिभूतं सादृश्यं निमित्तमित्यर्थः [1] । संबन्ध [2] एवेति । तथाचैकनिमित्तकत्वान्न लक्षणागौण्योर्भेद इति भावः ।

---

[1] 'स्वसंबन्धीति' इत्यारभ्य नास्ति–उ. ए. [2] न्धत्व–ए उ.

साद्दश्येपि स्वसंबन्धित्वस्या पेक्षायामपि मुख्यार्थ-संबन्धस्यानेन हेतुत्वासिद्धेः । अपि चेमौ सदृशा-वेव न तु संबद्धाविति[1] धीर्न स्यात् ॥

किंचेमौ संबद्धौ सदृशौ चेति प्रतीत्योर्विषय-कृतवैलक्षण्यं सर्वसाक्षिकम् । किंचैवं यदि साद्द-श्यं संबन्धविशेषस्तर्हि संबन्धोऽपि एकदेशस्थ-

---

**साद्दश्येति** । प्रसङ्गभङ्गकतयोपात्तो[2] मुख्यार्थसंबन्धो न वृत्तौ निमित्तं भवितुमर्हति । किंतु साद्दश्यमेवातो भिन्ननिमित्तकत्वाल्लक्षणागौण्योर्भेद इति भावेन सदृष्टान्तमाह —**संबन्धे संबन्धित्वस्येवेति** । यथा लक्षणावृत्तौ न संबन्धमात्रं निमित्तम् अतिप्रसङ्गात् किंतु मुख्यार्थ-संबन्धिसंबन्धित्वम् तथापि तत्र मुख्यार्थसंबन्धित्वं संबन्धे विद्यमानं लक्षणावृत्तौ न निमित्तं तथेत्यर्थः । **अनेनेति** । अतिप्रसङ्गभङ्गनार्थ-मुपात्तेन मुख्यार्थसंबन्धित्वरूपसाद्दश्यविशेषणेनेत्यर्थः । साद्दश्यस्य संबन्धत्वे बाधकं चाह—**अपिचेति** ॥

ननु—संबद्धाविति धीः संयोगादिरूपसंबन्धविशेषाभावविषया । न तु संबन्धसामान्याभावविषया । येन साद्दश्यं न संबन्धः स्यादिति चेन्न । सामान्यविशेषविषयत्वकल्पकाभावात् । साद्दश्यस्य संबन्धत्वधीरेव कल्पिकेति चेन्न । तदभावस्योक्तत्वात् । प्रत्युतासंबन्धत्वधीरेवानुभव-सिद्धेत्याह—**किं चेति** । सुधोक्तं बाधकं चाह—**किंचैवमिति** । तस्यै-वार्थः साद्दश्यमित्यादि—**एकदेशेति** । संबद्धौ [3]ह्येकदेशे वर्तेते इति

---

[1] त्यादि–सु. क.　[2] त्तो अमु–उ त्तेत्यमु–ए.　[3] न्धोह्येकदेशे वर्तते–नं. ए.

[1]त्वात्सादृश्यविशेषः किं न स्यात्। नैवं लौकिकी-धीरिति चेत्समं प्रकृतेति ॥

तदुक्तं सुधायाम्—तत्किं सादृश्यं संबन्धत्वेन प्रतियन्ति लौकिका इति ॥

तस्माद्यत्र मुख्यार्थसंबन्धो निमित्तं सा लक्षणा। यत्र तु सादृश्यं निमित्तं सा गौणीति ॥

[2]स्वमते गौण्या लक्षणातो भेदप्रकारः ॥ ६९ ॥



---

एकप्रदेशविशेषे वर्तमानत्वं द्वयोः संबद्धयोरन्यतरस्येवान्यतरस्याप्यस्तीति[3] संबन्धोपि सादृश्यविशेषः स्यात् । तथाच गौणीवृत्तिरेवास्ति न लक्षणेति वैपरीत्यमपि स्यादिति भावः । **प्रकृतेपीति** । सादृश्यस्यापि संबन्धत्वधीर्लौकिकी नास्तीत्यर्थः । **तदुक्तमिति** । आनुमानिकपादे वृत्तिलक्षणोक्तिप्रस्तावे । तत्किमिति काकुः । प्रतियन्ति जानन्तीत्यर्थः । न प्रतियन्तीति यावत् ॥

अनुव्याख्यानोक्तदिशा निमित्तभेदेनोपपादितं वृत्तिभेदमुपसंहरति—**तस्मादिति** ॥

स्वमते गौण्या लक्षणातो भेदप्रकारः ॥ ६९ ॥



---

1 त्वादिसादृश्य–**सु.** स्थानादिसादृश्य–**क.** 2 अत्र प्रकरणविभागोनास्ति–**रा. सु. ग.** 3 ति सादृश्यमपि संबन्धविशेषःस्यात्–**उ. ए.** श्यमपिसंबन्धविषयः स्या–**नं.**

## अथ परोक्तस्य गौण्या लक्षणातो भेदस्य भङ्गः ॥७०

अन्येतु सिंहनिष्ठशौर्यादिगुणा लक्ष्यमाणाः सिंहशब्दस्य माणवके वृत्तौ निमित्तमित्याहुः । तन्न । व्यधिकरणानां[1] गुणानां माणके वृत्तौ निमित्तत्वायोगात् । लक्ष्यमाणगुणसादृश्या द्गुणान्तरं ततो गुणी लक्ष्यत इति गौणी लक्षितलक्षणैवेति[2] तु नानुभवानुसारि । किंचावश्यकत्वाल्लाघवाच्च सिंहेन सह माणवके यत्सादृश्यं तदेव निमित्तं युक्तम् ॥

अथ परोक्तस्य गौण्या लक्षणातो भेदस्य भङ्गः ॥ ७० ॥

परोक्तभेदप्रकारमनूद्य सुधोक्तदिशा निराह—**अन्येत्वित्यादिना**। **लक्ष्यमाणेति** । सिंहो माणवक इत्यादौ ।

लक्ष्यमाणगुणैर्योगाद्वृत्तिरिष्टातु गौणता ।

इति काव्यप्रकाशिकाद्युक्तदिशा सिंहशब्देन लक्ष्यमाणसिंहनिष्ठगुणानां माणवके सिंहशब्दवृत्तौ निमित्तत्वं न युज्यते । अन्यनिष्ठगुणानामन्यत्र शब्दवृत्तौ निमित्तत्वेऽतिप्रङ्गात् । [3]सिंहनिष्ठगुणसदृशाः क्रौर्यादयो माणवकनिष्ठा लक्षणीयाः । तैश्च गुणी माणवको लक्ष्यत इति लक्षितलक्षणैव । न तु शुद्धलक्षणेति । लक्षणागौण्योरयमेव भेद इत्यर्थः। अनुभवे विवादिनं प्रत्याह—**किंचेति** । **आवश्यकत्वादिति** । गुणान्तरलक्षणार्थं मुख्यार्थनिष्ठगुणसादृश्यस्य त्वयाप्युक्तत्वादिति भावः ॥

[1] सिंहनिष्ठेत्यधिकम्–**सु. क. ग.** [2] तन्ना–**रा. ग.** [3] एवं चेत्यधिकम्–**उ. नं. ए.**

केचित्तु सादृश्यस्य संबन्धविशेषत्वेपि यत्र संबन्धत्वेन हेतुता सा लक्षणा, यत्र तु सादृश्यत्वेन हेतुता सा गौणीत्याहुः। तन्न। सादृश्यं संबन्धविशेषो नेत्युक्तत्वेन क्लिष्टकल्पनायोगात्। यत्र संयोगत्वादिना हेतुता तस्या वृत्त्यन्तरत्वापाताच्च॥

इतरे तु यत्रोपस्थापकस्यापि वाक्यार्थेऽन्वयः सा गौणी। तत्र सादृश्यस्यापि प्रतीतेः। [1]यत्र तु न तस्य वाक्यार्थेन्वयः सा लक्षणा। तत्र संबन्धस्याप्रतीते रित्याहुः। तन्न[2]। लक्षणायामपि संबन्धप्रतीतेरुक्तत्वात्॥

अन्ये तु यत्र धर्मे तात्पर्यं सा गौणी। सिंहो देवदत्त इत्यत्र धर्मिणो देवदत्तपदेनैवोक्तेः। यत्र तु धर्मिमात्रे तात्पर्यं सा लक्षणा। तत्र तीरस्य

---

लक्षणागौण्योः प्रकारान्तरेण भेदमनूद्य निराह—**केचित्त्वित्यादिना**। हेतुतावच्छेदकभेदाद्भेदेऽतिप्रसङ्गमाह—**यत्र संयोगत्वादिनेति। उपस्थापकस्यापीति।** सादृश्यसंबन्धयोरमुख्यरूपार्थान्तरोपस्थापकयोः शाब्दबोधे भानाभाननिमित्तवाक्यार्थान्वयानन्वयाभ्यां गौणलक्षणयोर्भेदमाहुरित्यर्थः। **उक्तत्वादिति।** शक्यसंबन्धित्वेनैव लक्ष्याद्यर्थकत्वसमर्थनवादे उक्तत्वादित्यर्थः। लक्षणावृत्तिलक्षणं गौण्यामप्य-

---

[1] त्र. सादृश्यस्य न वा–**क** त्रतु तस्य न वाक्या–**ग.** [2] सिंहनिष्ठ क्रौर्यादिगुणा लक्ष्यमाणा सिंहशब्दस्य माणवके वृत्तौ निमित्तमित्याहुः। तन्न। इत्यधिकम् ततः " व्यधिकरणानामपि संबम्–**रा. ग.**

पदान्तरेणानुक्तेरित्याहुः । तन्न । सिंहमानयेति गौण्यामपि धर्मिवाचिपदाभावात् ॥

अपरे तु सामानाधिकरण्ये गौणी, वैयधिकरण्ये लक्षणेत्याहुः । तन्न । अग्नेरध्यनं गङ्गा घोषवतीत्यपि दर्शनात् ॥

[1] परोक्तस्य गौण्या[2] लक्षणातो भेदस्य भङ्गः ॥ ७० ॥

## अथ रूढ्यादिवृत्तित्रयस्य बलाबलनिर्णयः ॥ ७१ ॥

[3] अत्र मुख्यवृत्तित्रये पङ्कजादिशब्देषु

---

स्तीत्याह—**सिंहमानयेति** । सिंहसदृशमाणवकमानयेत्यर्थके वाक्य इत्यर्थः । **सामानाधिकरण्य इति** । पदस्य पदान्तरेण सामानाधिकरण्ये सतीत्यर्थः । एवमग्रेपि । सिंहश्चैत्र इत्यादावेकविभक्तित्वेन सामानाधिकरण्यं, गङ्गायां घोष इत्यादौ भिन्नविभक्तिकत्वेन वैयधिकरण्यमिति भावः । माणवकस्याध्ययनमितिवाक्ये माणवके पावित्र्यादिसूचनायाग्निसादृश्यं वक्तुमग्नेरध्ययनमित्यादिवाक्यप्रयोगदर्शनादित्यर्थः ॥

परोक्तस्य गौण्या लक्षणातः भेदस्य भङ्गः ॥ ७० ॥

अथ रूढ्यादिवृत्तित्रयस्य बलाबलनिर्णयः ॥ ७१ ॥

एवमस्य शब्दस्य वृत्तिस्त्रेधेत्यादिना प्रकरणदशकेन विभागलक्षणपरीक्षाभिर्वृत्तिस्वरूपाणि निर्धार्येदानीं बलाबलं निरूपयितुं मुख्यवृत्तीनां तावत्तदाह—**अत्रेति** । प्राङ्निरूपितमुख्यामुख्यवृत्तिमध्ये

---

[1] अत्र " गौण्यालक्षणातो भेदोक्ति " इति नाम लिखितमस्ति-रा. ग. तस्मात्परोक्तपक्षषट्कमप्ययुक्तम्-इत्यधिकं च-सु. क. [2] गौण्या इत्यधिकम्-क. [3] तत्र-सु. क.

रूढेर्योगाच्च योगरूढिः प्रबला। रूढार्थस्य पद्मशब्देनापि, यौगिकार्थस्य च कर्दमजातशब्देनापि, प्रतीतिसंभवेनाप्तप्रयुक्तानामवयवानां समुदायस्य च सार्थक्यायोभयानुग्रहस्यौचित्यात् ॥

अत एव लोके निरुपपदेन पङ्कजशब्देनोत्सर्गतो जलकमलस्यैव धीः । न तु स्थलकमलस्य । [1] न वा कुमुदस्य। एवं वेदेपि ब्रह्मादिशब्दैर्न रूढिमात्राज्जीवादेर्धीः । नारायणादिशब्दैरपि न योगमात्रादवयनवस्तुमात्रस्य ॥

---

यन्मुख्यवृत्तित्रयं तस्मिन्नित्यर्थः । पङ्कजमानयेत्यादौ रूढितः स्थलकमल[2]स्य योगात्कुमुदादेर्योगरूढितो जलकमलस्य ग्रहणप्रसक्तौ कस्य ग्रहणमित्यत आह—**रूढेर्योगाच्चेति** । प्राबल्ये हेतुमाह—**रूढार्थस्येति** । **वेदेपीति** । "तद्विजिज्ञासस्व, तद्ब्रह्म" इत्यादौ. श्रुतब्रह्मशब्दादेः "अथ कस्मादुच्यते ब्रह्मेति । बृहन्तो ह्यस्मिन्गुणाः" इत्यादिश्रुत्या, "तदेव ब्रह्म परमं" [3] इत्यादिश्रुत्या च योगरूढैर्ब्रह्मादिशब्दैरित्यर्थः । व्यक्तमेतज्जन्माधिकरणचन्द्रिकायाम् ॥

आदिपदे "नात्मा वारे द्रष्टव्यः" इत्यादावात्मादिशब्दग्रहः । तथान्तराकाशप्राणाद्यधिकरणोदा[4]हरणभूतेन्द्रामित्राग्न्याकाशप्राणादिशब्दानां च ग्रहः । तेषामपि देवादौ रूढि[5]मात्राद्विष्णौ योगरूढिमत्त्वात् । रूढितो योगरूढेः प्राबल्ये उदाहरणमुक्त्वा योगात्तत्प्राबल्ये आह— **नारायणेति** ॥

---

[1] 'न वा कुमुदस्य' इति नास्ति—**ग.** [2] स्यायो—**नं. ए.** [3] कवीनां इत्याधिकम्—**नं. उ.** [4] दाहृतभू—**उ.** [5] ढमा—**नं. उ.**

**रूढियोगयोस्तु योगाद्रूढिः प्रबलेति तया योगस्यापहारः । यथा वर्षासु रथकारोऽग्नीनादधीतेत्यत्र रथकारशब्दे संकरजातौ रूढ्या रथकर्तरि योगस्य । यथा वा मण्डपं पश्येत्यत्र गृहविशेषे रूढ्या मण्डपानकर्तरि योगस्य ॥**

---

आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः ॥

इति स्मृत्या "विष्णुर्नारायणः कृष्ण" इत्यभिधानेन[1]च विष्णौ योगरूढेर्नारायणादिशब्दैः "नारायणं महाज्ञेयं" इत्यादौ जलाश्रयमात्रवस्तुनो न प्रतीतिः किंतु विष्णोरेवेत्यर्थः । एवं रूढेर्योगाच्च योगरूढेर्बलवत्त्वमुपपाद्य योगाद्रूढेस्तदाह—**रूढियोगयोस्त्विति** । **वर्षासु**—वर्षर्तौ । शब्दस्वाभाव्यात् स्त्रीलिङ्गं बहुवचनं च । **संकरजाताविति**—

शूद्रायां करभो वैश्यान्महिष्यो विट्स्त्रियां नृपात् ।
रथकारस्तु माहिष्यात्करभ्यां यस्य संभवः ॥

इत्युक्तसंकरजातावित्यर्थः । **योगस्येति** । अपहार इत्यनुषङ्गः । एवमग्रेपि । अत एव षष्ठे वचनाद्रथकारस्याधानमित्याद्यपादीयोपान्त्याधिकरणे रथकर्तृत्वयोगेन त्रैवर्णिकपरत्वं रथकारशब्दस्याशङ्क्य रूढ्या संकरजातिपरत्वमुक्तमिति भावः । **मण्डपानेति** । मण्डं घनीभूतदधिखण्डविशेषं पिबतीति व्युत्पत्तेरिति भावः ॥

---

[1] न योगरूढनारायणशब्दैः–उ. नं.

ननु—

रूढेः प्राबल्यं न तावत्समुदायात्परया विभक्त्या स्वार्थस्य कर्मत्वादेः समुदायार्थे बोधनादवयवार्थे त्वबोधनादिति युक्तम् । यौगिकार्थे प्रकरणादिसत्त्वेपि तया तत्र तदबोधनप्रसङ्गात् । रूढावखण्डनसमुदायादिव योगेपि सखण्डसमुदायात्परत्वस्य सत्त्वाच्च ॥

अन्यथा पाचकमानय पङ्कजमानयेत्यादौ कर्मत्वादेर्यौगिकार्थान्वयो न स्यात् ॥

योगाद्रूढेः प्राबल्यमुपजीव्यत्वादिनेत्युपपादयिष्यन् प्रकारान्तरेण प्रसक्तप्राबल्ये[1]हेतुचतुष्टयं पूर्वपक्षिमुखेनानूद्य निराचष्टे---**नन्वित्यादिना उच्यत** इति पर्यन्तेन । **यौगिकार्थेति** । यौगिकार्थग्राहकप्रकरणलिङ्गासवाक्यादिसत्त्वेपि तया समुदायात्परया विभक्त्या कर्मत्वकर्तृत्वाद्यबोधप्रसङ्गात् । अवयवार्थे तदबोधनादिति त्वयोक्तत्वात् । न चेष्टापत्तिः । अनुभवविरोधादिति भावः ॥

यदि समुदायात्परविभक्त्या स्वार्थभूतकर्मत्वादेर्बोधनमवयवार्थेन स्यात् तर्हि केवलयौगिकस्थले प्रोक्षणीरासादयेत्यादावपि विभक्त्यर्थकर्मत्वादेरन्वयो न स्यात् । तत्रापि विभक्तेः समुदायात्परत्वात् । नन्वखण्डसमुदायात्पराविभक्तिरेवावयवार्थे स्वार्थं न बोधयति रथकारमानयेत्यादौ प्रोक्षणीरित्यादिसखण्डसमुदायात्परा तु बोधयत्येवेति चेन्न । तत्र प्रकरणादिनाऽवयवार्थविवक्षायामप्यबोधनापातादित्युक्तत्वात् । विपक्षे बाधकं चाह—**अन्यथेति** । सखण्डसमुदायात्परयापि विभक्त्या

[1] ल्यहे—नं. उ.

नापि—रूढौ शाब्दानुभवकारणीभूता वर्णसमुदायगोचरा स्मृतिरेकेति शीघ्रा। एकशक्त्याधारवर्णेष्वेकैव स्मृतिरिति फलबलेन कल्पनात्; योगे तु अनेकशक्त्याधारा अनेकावयवगोचरा तु नानेति विलम्बितेति रूढेः प्राबल्यमिति युक्तम्। समुदायगोचराया एव स्मृतेरवयवगोचरत्वात्॥

अत एव शाब्दानुभवेतिकर्तव्यताभूता समुदायनिष्ठैकशक्तिस्मृतिः शीघ्रा। अवयवनिष्ठनानाशक्तिस्मृतिस्तु विलम्बितेति रूढेः प्राबल्यमिति निरस्तम्। समुदायशक्तिस्मारक[1]वर्णसमुदायगोचराया एवोपस्थितेरवयवविषयतया तज्जन्याया अवयवनिष्ठनानाशक्तिसमूहालम्बनस्मृतेर्विलम्बा-योगात्। प्रत्युतसमुदायज्ञानस्यावयवज्ञानपूर्वकत्वादवयवैरेव[2] पूर्वं शीघ्रं स्वशक्तिस्मारणं युक्तम्॥

अत एवैकशक्तिस्मृतिजन्या समुदायार्थस्मृतिरेकेति शीघ्रा। अनेकशक्तिस्मृतिजन्यावयवार्थ

अवयवार्थे स्वार्थाबोधन इत्यर्थः। **नापीति**। युक्तमित्यन्वयः। स्मृतिरेकेत्येतद्व्यनक्ति—**एकशक्तीति**। **फलेति**। शाब्दानुभवरूपफलबलेनेत्यर्थः। **समुदायगोचराया एवेति**। तथाचैकत्वात्स्मृतेः कथं शीघ्रत्वविलम्बितत्ववैषम्यमिति भावः। अत एवेत्युक्तं व्यनक्ति—**समुदायेति**। **तज्जन्याया इति**। अवयवविषयोपस्थितिजन्याया इत्यर्थः। **अवयवैरिति**।

[1] 'वर्णसमुदाय शक्तिस्मारक' इत्यधिकम्—**सु.**　[2] पूर्वं इति नास्ति—**रा. सु. क. ग.**

स्मृति[1]र्नानेति विलम्बितेति परास्तम् । पदं न स्मारकमित्युक्तत्वात् । स्मारकत्वेप्यवयवनिष्ठशक्तिस्मृतावविलम्बस्योक्तत्वाच्च ॥

तस्माच्चतुर्धा[2]पि न रूढेर्योगात्प्राबल्यमिति । उच्यते ॥

अवयवे रूढिं विना समुदाये योगासंभवेनोपजीव्यत्वाद्रूढेः प्राबल्यं, शीघ्रत्वाच्च । तथा[3]च रूढार्थानुभवो वर्णानुभवश्च वर्णश्रवणमात्राद्भव[4]तीति शीघ्रः ॥

किंचा[5]खण्डत्वेन परस्परान्वयनिरपेक्षस्य तस्य विभक्त्यर्थान्वयः क्रियान्वयोपि शीघ्रः । यौगि-

स्मृतिविषयभूतैरित्यर्थः । **चतुर्धापीति** । विभक्त्यर्थस्य समुदायार्थबोधनेन, वर्णसमुदायगोचरस्मृतेः शीघ्रत्वेन, शक्तिस्मृतेः शीघ्रत्वेन, पदार्थस्मृतेः शीघ्रत्वेन, वा चतुर्धापीत्यर्थः ॥

"रूढि[6]मेव समाश्रित्य विभज्यार्थान्यथाक्रमम् ।
विशेषगुणपूर्त्यर्थं विष्णौ योगार्थमानयेत्" ॥

इति ऋग्भाष्योक्तिं हृदि कृत्वाह— **अवयवे[7] रूढिं विनेति** । अवयवस्यापि यौगिकत्वे तदवयवस्याप्येवमित्यनवस्थापातेन पूर्वपूर्वयोगासिद्ध्योत्तरोत्तरयोगासिद्धेर्मूलक्षतेः। 'अनवस्थानिवृत्त्यर्थं यौगिके रूढिकल्पने'ति कर्मनिर्णयोक्तेरिति भावः । वाक्ये पदात्पदार्थस्मृतेरनभ्युपगमाद्रूढार्थानुभव इत्युक्तम्। **परस्परेति** । अवयवार्थानामन्योन्यान्वयनिरपेक्षस्येत्यर्थः। **तस्येति** ।

[1] स्तुना–रा. ग. [2] अपिपदं न–रा. ग. [3] थाहिरू–रा. सु. क. ग. [4] वतीति–रा. सु. क. ग. [5] किंच इति नास्ति–रा. ग. [6] पमे–नं उ. [7] वरू–उ. ए.

**कार्थानुभवस्तूपपदधातुप्रत्ययविभागज्ञानपूर्वक इति विलम्बितः । तेषां परस्परान्वयज्ञानपूर्वकः क्रियान्वयो[1]पि विलम्बितः । एवं च शीघ्रया रूढ्या प्रतिबन्धाद्वा शीघ्रोपस्थितेन रूढार्थेनान्वितस्य पदान्तरस्य यौगिकार्थे नैराकाङ्क्ष्याद्वानन्वयः ॥**

**यद्यपि समुदायोपस्थितिरेवावयवगोचरा तथापि सा वर्णत्वरेफत्वादिनैव तद्गोचरा । सा च न यौगिकार्था[2]नुभवहेतुः । या तु यौगिका[3]र्थानुभवहेतु[4]रूपपदत्वादिनोपस्थितिः सा विलम्बिता । पङ्कजादौ त्वविरोधादवयवार्थेपि प्रयोगप्राचुर्येणप्रतिब[5]ध्यत्वे तन्त्रस्य तदप्राचुर्यस्याभावाच्च न रूढ्या तदपहारः ॥**

---

रूढार्थस्येत्यर्थः । उपपदेति । कुम्भकारेत्यादौ कुम्भाद्युपपदं[6] पाचकेत्यादौ पचिधा[7]त्वर्थकप्रत्ययविभागः, यद्वा पङ्कजशब्दादौ पङ्कजाद्युपपदजनिधातुडप्रत्ययानां विभाग तज्ज्ञानपूर्वक इत्यर्थः ॥

ननु उपपदादिज्ञानपूर्वकत्वेन योगे विलम्बोक्तिरयुक्ता समुदायोपस्थितिरेवावयवोपस्थितिरित्युक्तत्वादिति प्रागुक्तचोद्यमनूद्य निराह—**यद्यपीति** ॥

नन्वेवं योगरूढिस्थलेपि रूढ्या योगापहारः स्यात् । तथाच पङ्कजपदाज्जलकमलधीर्न स्यात् । इत्यत आह—**पङ्कजादौ त्विति । तदप्राचुर्यस्येति ।** प्रयोगाप्राचुर्यस्येत्यर्थः । एवं योगाद्रूढेरुपजीव्यत्व-

---

[1] अपि इति–**रा. ग.** [2] र्थोपस्थितिहे–**ग.** [3] र्थोपस्थितिह–ग. [4] रूप–**रा. ग.** [5] द्धत्वे–**रा. ग.** द्धार्थत्वे–**सु.** [6] विभाग. इत्यधिकम्–**नं. उ.** [7] त्वक-**नं. उ.**

**अपहारोपि न यौगिकार्थास्मृतिः । स्मारकसंबन्धस्य शक्ते[1] रूढ इव यौगिकेपि सत्त्वात् । नापि प्रथममस्मृतिः। पङ्कजादावपि रूढ्या योगापहारापातात् । स्मारकत्वस्य निरासाच्च । नापि मण्युक्तान्वयबोधबहिर्भावः। भ्रमरूपस्याप्यन्वयबोधस्याभावे रथकाराधिकरणपूर्वपक्षानुदयापातात् । नापि प्रमारूपतद्बहिर्भावः । अनाप्तवाक्ये रूढस्यापि तद्बहिर्भावेन तस्याप्यपहारापातात् ॥**

शीघ्रत्वाभ्यां प्राबल्योपपादनेन रूढ्या योगापहार इत्युपपादितम् । तत्रापहारपदार्थे स्वाभिमतं विवक्षुश्चत्वारि पक्षान्तराण्यनूद्य निराह— **अपहारोपीति** । स्मारकसंबन्धस्य शक्तेरिति सामानाधिकरण्यम् । **अस्मृतिरिति** । यौगिकार्थस्येति योज्यम् । **पङ्कजेति** । पङ्कजमानयेत्यादावपि यौगिकार्थस्य प्रथममस्मृत्या तत्र रूढ्या योगापहारापत्तेः । न चेष्टापत्तिः । जलकमलधीविरोधादिति भावः । **स्मारकत्वस्येति** । वाक्ये पदं न स्मारकमिति भाट्टाभिमताभिहितान्वयभङ्गे प्रतिपादितत्वेन रूढेरपि प्रथमं रूढार्थास्मारकत्वाद्रूढेरप्यपहारापातादिति भावः । अन्वयबोधबहिर्भावः किं भ्रमरूपान्वयबोधाविषयत्वं उत प्रमारूपतदविषयत्वम्। आद्यमसिद्धमिति भावेनाह—**भ्रमेति** । रथकारेति वचनाद्रथकारस्याधानमिति षष्ठाद्यपादीयोपान्त्याधिकरणे रथकारशब्दस्य यौगिकत्वेन रथकर्तृत्रैवर्णिकपरत्वेन पूर्वपक्षकरणादिति भावः । द्वितीयेऽतिप्रसङ्गमाह—**अनाप्तेति** । पङ्कजमस्तीत्याद्यनाप्तवाक्यस्य तार्किकमते बोधकत्वाभावेन तत्र रूढार्थस्य शाब्दबोधाविषयत्वेनेत्यर्थः ॥

[1] क्तः रू–ग. रा.

किंतु तात्पर्य[1]विषयबहिर्भावः । तस्मान्मण्डपं पश्येत्यादौ[2] निरवकाशप्रकरणादेरभावे रूढ्या योगापहारः । भावे तु योगग्रहः । मण्डपं भोजयेत्यादौ रूढस्यायोग्यत्वाद्योगग्रहः ॥

तदुक्तमनुव्याख्याने —“ पूर्वायोगे परग्रह ” इति । उपजीव्यत्वेन शीघ्रत्वेन पूर्वस्या[3] रूढेरयोगे[4] परस्य योगस्य ग्रह इत्यर्थः । न तु तत्र मीमांसकोक्ता लक्षणा । योगस्यापि शक्तित्वेन मुख्यत्वात् । समुदायशक्त्यसंभवेन्तरङ्गक्लृप्तावयवशक्तावेव बुध्यवताराच्च । मुख्यार्थबाधाद्यनुसन्धानानपेक्षत्वेन शीघ्रत्वाच्च । लक्षणायाश्चातथात्वात् ॥

---

नन्वेवं रूढेः प्राबल्येन तया योगार्थस्य तात्पर्याविषयत्वरूपापहारे सति जन्माद्यधिकरणादौ तद्विजिज्ञासस्व तद्ब्रह्मेति श्रौतब्रह्मशब्दे रूढजीवत्यागेन यौगिकविष्णुग्रहणं कथमुक्तमित्याशङ्कां परिहरन्नुपसंहरति—**तस्मादिति** । जन्मादिनये तु निरवकाशलिङ्गादेव यौगिकग्रह इति भाव । **तदुक्तमिति** । रूढेरुपजीव्यत्वादिना पूर्वभावित्वात्तदसंभव एव योगग्रहणमित्येतत्पूर्वोदाहृतानुव्याख्याने उक्तमित्यर्थः । **न तु तत्रेति** । मण्डपं भोजयेत्यादौ रूढ्यर्थगृहविशेषस्यान्वयायोग्यत्वाद्रूढार्थगृहसंम्बन्धिपुरुषज्ञानं लक्षणया मण्डपपदेन जायत इति मीमांसकोक्तं न भवतीत्यर्थः । **अतथात्वादिति** । उक्तत्रैविध्यवैपरीत्यादित्यर्थः ॥

---

[1] र्यार्थ–ग. [2] योगे इत्य-सु-ग. [3] स्या.–सु. [4] अप–सु.

**न चात्र योगस्य बाधकमस्ति । प्रबलाया रूढेरयोग्यतया निवृत्तेः । तत्पूर्विकाया लक्षणायाश्चोक्तहेतुभिर्योगाद्दुर्बलत्वाच्च ॥**

**न च रूढिपूर्वकलक्षणया रूढी रक्ष्यते । रूढ्यबाधे लक्षणाया एवानुदयात् । येन प्रबलरूढ्य[1]पेक्षया लक्षणा प्रबला स्यात् ॥**

ननु—मुख्यत्वेपि योगस्य त्यागोस्त्वित्यत आह—**न चात्रेति** । यद्वा—अत्राप्यस्ति मुख्यार्थबाधतद्योगानुसंधानमित्यत आह—**न चात्रेति** । तदेव व्यनक्ति—**प्रबलाया इति** । **उक्तेति** । योगस्यापीत्यादिनोक्तहेतुभिरित्यर्थः[2] ॥

ननु—रूढिपूर्वकलक्षणाया रूढ्याश्रयेण बलवत्त्वाद्योगबाधकत्वमस्त्वित्यत आह—**न चेति** । [3]रक्ष्यत इत्यन्वयः । कुतो न रक्ष्यत इत्यत आह—**रूढीति** ॥

नन्वे[4]वमुद्गातृचमसमेकस्य श्रुतिसंयोगादिति तृतीयाध्यायपञ्चमपादीयाष्टमाधिकरणे प्रैतुहोतुश्चमसः प्रब्रह्मणः प्रोद्गातॄणामित्युदाहृत्योद्गायन्तीत्यवयवप्रसिद्ध्या गानकारिणामपसुब्रह्मण्यानां त्रयाणां छन्दोगानां चमसभक्षणमिति पूर्वपक्षयित्वा उत्पूर्वस्य गायतेः समुदायप्रसिद्धिरूपरूढ्या द्वितीयसामभक्तिविषयत्वेनोद्गातुरेव तद्गातृत्वेन ससुब्रह्मण्यानां चतुर्णां लक्षणेति शाबरभाष्ये स्थापितत्वात् । वार्तिककृता चापसुब्रह्मण्यानां त्रयाणां लक्षणेति स्थापितत्वात् कथमेवमुक्तिरित्यतस्त-

---

[1] ढ्याश्रयेण-**रा-ग.** [2] तत्रैव लक्षणेति । नीलवान् घट इति मतुबर्थलक्षणेत्यर्थः । अभेदे । अभेदवादे । भेदे चेति । गुणगुणिनोर्भेदवादे चेत्यर्थः । मतुब्लोपेनेति । तदस्यास्त्यस्मिन्निति सूत्रेण गुणवचनेभ्यो मतुब्लोपो वक्तव्यः इत्यनुशासनात् । इत्यधिकम्-ए. [3] व-**उ. ए.** [4] एवं इति नास्ति-**नं. उ.**

प्रोद्गातॄणामित्यत्राप्युद्गातृशब्दस्योद्गातृप्रस्तो - तृप्रतिहर्तृसुब्रह्मण्येषु [1] चतुर्षु अपसुब्रह्मण्येषु त्रिषु-वोद्गानकर्तृत्वाद्योग एव। न तु ऋत्विग्विशेषे उद्गातरि[2] योगरूढिः। तत्पूर्विका तेषु लक्षणा। यत्र तु रूढिपूर्वकलक्षणायां तात्पर्यं निरवकाश-मानासिद्धं तत्र योगं बाधित्वा सापि भवत्येव ॥

एतदप्युक्तं "पूर्वायोगे परग्रह" इति। पूर्वस्या रूढेरयोगे अनन्तरस्य मुख्यवृत्तिरूपस्य योगस्य ग्रहः। न तु लक्षणायाः। योगस्याप्ययोगश्चेत्प-रस्यामुख्यवृत्तेर्लक्षणाया ग्रह इत्यर्थः ॥

रूढ्यादिवृत्तित्रयस्य बलाबलनिर्णयः ॥ ७१ ॥

## अथ लक्षणातो गौण्याः प्राबल्यनिर्णयः ॥ ७२ ॥

अमुख्यवृत्तौ गौणीतो लक्षणा जघन्या।

---

दुभयोक्तमप्ययुक्तमिति भावेनाह—**प्रोद्गातॄणामिति**। सापि—लक्ष-णापीत्यर्थः। **एतदपीति**। रूढेरसंभवे योगस्यैव ग्रहणं न तु लक्षणाया इत्येतत्। तथा योगस्याप्यसंभव एव लक्षणेत्येतदपीत्यर्थः ॥

रूढ्यादिवृत्तित्रयस्य बलाबलनिर्णयः ॥ ७१ ॥

अथ लक्षणातो गौण्याः प्राबल्यनिर्णयः ॥ ७२ ॥

एवं मुख्यवृत्तित्रये प्राबल्यदौर्बल्ये निरूप्यामुख्यवृत्त्योरपि ते आह—**अमुख्यवृत्ताविति**। जातावेकवचनम्। जघन्या—निकृष्ट-

---

[1] चतुर्ष्विति नास्ति–रा. ग. [2] तर्यादौ–रा. सु. ग.

ननु—

न तावद्गौण्यां प्रथमोपस्थितसादृश्य एव-तात्पर्यम् लक्षणायां तु प्रथमोपस्थितसंबन्धद्वारा पूतत्वादाविति लक्षणा विलम्बितत्वाज्जघन्येति युक्तम्। लक्षणायामपि मञ्चाःक्रोशन्तीत्यादौ मञ्चसंबन्ध एव तात्पर्यात् ॥

नापि गौण्यां तात्पर्यविषये सिंहसादृश्ये निरूपकतया सिंहोनुप्रविष्टः, लक्षणायां तु तात्पर्यविषये पूतत्वादौ गङ्गा नानुप्रविष्टेति लक्षणा मुख्यार्थासंस्पर्शिनीति जघन्या। काकेभ्यो दधि रक्ष्यतामित्यादावपि काकशब्देन दध्युपघातकस्यैव विवक्षितत्वान्न मुख्यार्थसंस्पर्श इति युक्तम्। मञ्चाः क्रोशन्तीत्यादावपि संबन्धनिरूपकतया मञ्चानुप्रवेशात् ॥

त्यर्थः। स्वयं प्रधानबाधादिना लक्षणाया जघन्यत्वं विवक्षुर्लक्षणाजघन्यत्वे प्रकारान्तरेण प्रसक्तं हेतुचतुष्टयं क्रमेणानूद्य निराह—**ननु न तावदित्यादिना अत्रोक्तं सुधायामिति पर्यन्तेन**। उक्तं विलम्बितत्वं लक्षणायामसिद्धमित्याह—**लक्षणायामपीति**। **नापीति**। युक्तमित्यन्वयः। क्वचिदजहत्स्वार्थलक्षणादावस्ति मुख्यार्थकाकादिसंस्पर्श इत्यत आह—**काकेभ्य इति**। **संबन्धेति**। मञ्चसंबन्धिपुरुषाः क्रोशन्तीत्यर्थतया मञ्चानां संबन्ध[1]निरूपकत्वेन लाक्षणिकार्थेनुप्रवेशादित्यर्थः ॥

[1] न्धिनि-नं. उ.

नापि—सिंहशब्दस्य येन माणवकेनान्वयानुपपत्तिः तत्रैव माणवके वृत्तेर्गौण्याः[1] शैघ्र्यम्। गङ्गाशब्दस्य तु येन घोषेणान्वयानुपपत्तिस्तं विहायान्यत्र तीरे वृत्तेर्लक्षणाया[2] मान्द्यम्। न च नीलो घट इत्यादौ गुणवाचिनो नीलशब्दस्य येन घटेनान्वयानुपपत्तिस्तत्रैव लक्षणा दृष्टेति वाच्यम्। गुणगुणिनोरभेदेऽ[3]नुपपत्त्यभावेन भेदे च मतुब्लोपेन तत्र लक्षणाया एवाभावात्। लाङ्गलं जीवनमित्यादौ यद्यपि जीवनशब्दस्य येनलाङ्गलेनान्वयानुपपत्तिस्तत्रैव लाङ्गले वृत्तिस्तथापि अतिप्रियत्वादिना सादृश्याज्जीवनशब्दो लाङ्गले गौण एव न तु लाक्षणिक इति युक्तम्। गौण्यामपि सिंहस्याध्ययनमित्यादौ अध्ययनान्वयानुपपत्त्या माणवकपरत्वे[4] मान्द्यात्॥

---

**नापीति**। युक्तमिति दूरेन्वयः। **अन्वयेति**। अभेदादिरूपान्वयानुपपत्तिरित्यर्थः। **घोषेणान्वयेति**। आधाराधेयरूपान्वयानुपपत्तिरित्यर्थः। **तत्रैव लक्षणेति**। नीलवान्घट इति मतुबर्थलक्षणेत्यर्थः। **अभेदे**। अभेदवादे। **भेदे चेति**। गुणगुणिनोर्भेदवादे चेत्यर्थः। **मतुब्लोपेनेति**। "तदस्यास्त्यस्मिन्निति" सूत्रे "गुणवचनेभ्यो मतुबो लुग्वक्तव्यः" इत्यनुशासनादिति भावः। **लाङ्गलेनान्वयेति**। अभेदान्वयानुपपत्तिरित्यर्थः। **सादृश्यादिति**। जीवनं यथातिप्रियं लाङ्गलमप्येवमिति सादृश्यादित्यर्थः। **गौण्यामपीति**। मान्द्यादित्य-

---

[1] ण्यांशै—सु. ग. [2] यां मा—रा. सु. ग. [3] देन्वयानु—सु. [4] त्वेन-मान्द्या—रा. सु. ग.

नापि नयविवेकोक्तरीत्या सिंहो माणवक इत्यत्र सिंहपदं न माणवकमात्रपरम्। पुनरुक्तेः। नापि सादृश्यमात्रपरम्। माणवकपदेन सामानाधिकरण्यायोगात्। किंतु सादृश्यविशिष्टपरमिति पदतात्पर्यपूर्विका वाक्यतात्पर्यधीः। गङ्गायां घोष इत्यत्र तु गङ्गापदं तीरमात्रपरम्। तीरवाचिपदान्तराभावात्[1]। गङ्गासंबन्धस्तु द्वारमित्यादौ द्वाररूपेणार्थेन पिधानमिव घोषरूपेणार्थेनोपस्थापितस्तमादाय संबन्धे वाक्यतात्पर्ये ज्ञाते पदानां संभूयकारित्वाद्गङ्गापदस्य संबन्धे पश्चात्तात्पर्यधीरिति लक्षणा विलम्बितेति युक्तम्। लक्षणायां

---

न्वयः। यथालक्षणायां येनान्वयानुपपत्तिस्तं विहायान्यत्र वृत्तिरिति मान्द्यमुक्तमेवं सिंहस्य गुरूच्चारणानूच्चारणरूपाध्ययनान्वयानुपपत्त्या सिंहपदस्य सिंहसदृशमाणवकपरत्वस्य वाच्यत्वान्मान्द्यं सममेवेत्यर्थः। **नापीति**। अत्रापि युक्तमिति दूरेन्वयः। **पदतात्पर्येति**। सिंहसादृश्यविशिष्टे सिंहपदस्य च[2] तात्पर्यं तद्धीपूर्विका सादृश्यविशिष्टस्य माणवकस्य चाभेदरूपवाक्यार्थे पदद्वयसमभिव्याहाररूपवाक्यस्य [3]यत्तात्पर्यं तद्धीरित्यर्थः। **संबन्ध इति**। विषयसप्तमी। घोषरूपार्थोपस्थापितसंबन्धयुक्ते वाक्यतात्पर्ये ज्ञात इत्यर्थः। **विलम्बितेति**। वाक्यतात्पर्यज्ञानानन्तरमेव लाक्षणिकपदस्य तात्पर्यज्ञानमिति विलम्बः। गौण्यां तु पूर्वमेव पद-

---

[1] 'किंतु' इत्यादिकं नास्ति–रा. ग. [2] स्ययत्ता–इति स्यात्.* [3] यादिति नास्ति–नं.ए.

वाक्यतात्पर्यबुद्धेः प्राथम्योक्तौ वाक्यार्थप्रमारूप-फले लक्षणाया एवाग्रेसरत्वेन तस्या एव प्राबल्या-पातात् । सति गङ्गापदे संबन्धस्य प्रथममर्थेनोप-स्थापनासंभवाच्च ॥

अन्यथा द्वारं पिधेहीत्यादावपि प्रथमं द्वार-रूपार्थोपस्थापितं पिधानमादाय वाक्यतात्पर्ये ज्ञाते पश्चात्पिधेहिपदस्य पिधाने तात्पर्यधीरिति स्यात् ॥

[1]तस्माच्चतुर्धापि लक्षणा गौणीतो न जघन्येति ॥

अत्रोक्तं सुधायाम्—

"अतो भेदवदेवैताः श्रुतयः प्रवदन्ति हि ।
पौराणानि च वाक्यानि सादृश्याभेदसंश्रयात्" ॥

---

तात्पर्यधीरिति गौणी श्लाघ्येति भावः । **अग्रेसरत्वेन** । प्रथमप्रवृत्तत्वे-नेत्यर्थः ॥

यदपि गङ्गासंबन्धो घोषरूपार्थेनोपस्थित इति कथनं तदपि नेत्याह—**सतीति** । **अन्यथेति** । सत्यपि पदेर्थेनैव पदार्थोपस्थापनाङ्गी-कार इत्यर्थः । **चतुर्धा[2]पीति** । गौण्यां प्रथमोपस्थितसादृश्य एव तात्पर्यं मुख्यार्थसंस्पर्शित्वं अनुपपद्यमानान्वयप्रतियोगिवृत्तित्वेन शीघ्रत्वं पूर्वमेव गौणप[3]दतात्पर्यज्ञानमित्येवं चतुःप्रकारेण गौण्याः श्रेष्ठत्वं उक्त-

---

[1] तस्मादिति नास्ति–रा. ग.   [2] चतुर्थापीति–**ए.**   [3] ण्यं शता–**उ. ए.**

**इत्यनुव्याख्यानव्याख्यावसरे —— तत्त्वमसीत्यत्र गौणी चेत्प्रधानं पदद्वयं मुख्यार्थम् । अप्रधानं सामानाधिकरण्यमात्रं सादृश्ये[1]गौणम् । पररीत्या लक्षणा चेत्पदद्वयममुख्यार्थं, सामानाधिकरण्यमात्रं मुख्यमिति प्रधानबाधादनेकबाधाच्च लक्षणा जघन्येति ॥**

**अयं च न्यायो यद्यपि तत्त्वमस्यादि वाक्य एव । सिंहश्चैत्र इत्यत्र सिंहसंबन्धिनि सिंहसदृशे च चैत्रे च लक्षणा चेत्सिंहप्रातिपदिकस्यैव बाधे नानेकबाधाभावात् । तथाप्येकस्यापि प्रधानस्य बाधात्तत्रापि लक्षणा जघन्येति ज्ञेयम् ॥**

---

चतुष्टयवैपरीत्याल्लक्षणायां जघन्यत्वमित्येतन्नेत्यर्थः । **अनुव्याख्यानेति** । वियत्पादे "पृथगुपदेशादि"त्येतदनुव्याख्याने[2]त्यर्थः ॥

अद्वैतवादिभिः खलु तत्त्वंपदयोर्विरुद्धस्वार्थैकदेशलक्षणाया सामानाधिकरण्यमात्रं मुख्यमङ्गीकृतमित्यादि सुधावाक्यार्थं निष्कृष्यानुवदति—**तत्त्वमसीत्यत्रेति । जघन्येति ।** इतिशब्दस्येत्युक्तंसुधायामिति पूर्वेणान्वयः ॥

नन्वत्र द्वितीयो हेतुर्न सार्वत्रिक इति कथं सर्वत्र लक्षणाया जघन्यत्वं साधयेदित्याशङ्कामनूद्य क्वाचित्काभिप्रा[3]यिक एवायं हेतुरिति परिहरति—**अयं चेति ।** द्वितीयो हेतुरित्यर्थः । वस्तुतो लक्षणास्थलेऽपि नानेकबाध इति दर्शयितुं सिंहसंबन्धी[4]त्युक्तम् । गौणस्थलेपि लक्षणा

---

[1] श्यात्–**रा. ग.** [2] न इ–**उ.** [3] प्राय एव–**नं.** त्कोभिप्राय एवायं हे–उ प्राय एवायं–हे. **ए.** [4] न्धिने–**नं.** नन्धिनी–**उ.**

**न च सामानाधिकरण्यस्य[1] बाधेप्यनेकविभक्तिबाध इति वाच्यम् । नीलं घटमानयेत्यादौ विशेष्यविभक्त्या घटगतकर्मत्वादेरुक्त्या विशेषणविभक्तेरेवाभेदार्थकत्वेन तन्मात्रबाधात् । वक्ष्यमाणरीत्या तस्या अप्यबाधाच्च । बहुत्वप्रयुक्तबला-**

स्वीकारेयं न्यायो[2] नेति दर्शयितुं सिंहसदृशे चेत्युक्तम् । सिद्धान्तेप्यनेकबाधमाशङ्क्य निराह—**न चेति । अनेकेति ।** पूर्वोत्तरपदगतप्रथमाविभक्त्योर्मुख्याभेदार्थत्वादिति भावः । इति न च वाच्यमित्यस्य तन्मात्रबाधादित्युत्तरम् । कुतो विशेषणभूतसिंहप्रातिपदिकनिष्ठविभक्तिमात्रबाध इत्यतो [3]यथा विभक्त्या मुख्याभेदो लभ्यते तन्मात्रस्यैव सादृश्या[4]भेदार्थकत्वे मुख्यार्थत्यागेन बाधः । अभेदावगमश्चै[5]कयेत्युक्तम् । **विशेषणेति ।** कुत एतदित्यत उक्तं इत्यादौ विशेष्येत्यादि । **वक्ष्यमाणेति ।** शूरत्वेनाभेदे सतीत्यादिग्रन्थेन वक्ष्यमाणेत्यर्थः ॥

अनेकविभक्तिबाधं गौण्यामभ्युपेत्यापि लक्षणाया जघन्यत्वमाह—**बहुत्वेति । स्वभावबलस्येति ।** प्रातिपदिकबलस्यानन्यप्रयुक्तत्वात्स्वभावबलस्येत्युक्तम्—

द्विविधं बलवत्त्वं च बहुत्वाच्च स्वभावतः ।
तयोः स्वभावो बलवान् . . . . ॥

इति तत्त्वनिर्णयोक्तेरिति भावः ॥

ननु—प्रधानबाधाल्लक्षणा जघन्येत्युक्तिरयुक्ता, प्रातिपदिकप्राधान्य-

[1] ण्यबा—सु. क. [2] येनेति—उ. [3] तस्तथा—नं. उ. थेःयथा—ए. [4] श्यमे—उ. [5] श्चैकधेत्युक्तत्वात्—नं उ.

दपि स्वभाव[1]बलस्य बलवत्त्वाच्च। प्रातिपदिक-प्राधान्यं च प्रयाजशेषेणेत्यादौ सिद्धम्॥

न च लक्षणायामपि गङ्गापदं मुख्यार्थमेव, सप्तम्येव प्रवाहस्यैव परम्परया घोषाधारताया ममुख्येति वाच्यम्। प्रवाहस्य परम्परयाप्यनाधारत्वात्। [2]तीराधारताया एवाभिप्रेतत्वाच्च।

---

स्यासिद्धेरित्यत आह—**प्रातिपदिकेति**। **प्रयाजेति**। चतुर्थेभि[3]घारणे विप्रकर्षादनुयाजवदभेदः स्यादित्याद्यपादीयत्रयोदशाधिकरणे प्रयाज-शेषेण हवींष्यभिघारयतीति वाजपेयगतवाक्ये श्रुतमभिघारणं किं हविः संस्कारार्थमुत प्रतिपत्तिरिति संदिह्य हवींषीति द्वितीयया शेषेणेति तृतीय-याच प्रधानोपसर्जनभावावगमात् हविःसंस्कारार्थमिति पूर्वपक्षयित्वा शेषस्य प्रतिपत्त्यपेक्षत्वाच्छेषपदप्रतिपादकस्वारस्येन प्रयाजशेषं हविःषु क्षारयेदिति प्रतिपत्तिरेवाभिघारणमिति सिद्धान्तितत्वादिति भावः॥

नन्वत्र न प्रातिपदिकत्वनिमित्तं तत्प्राधान्यं किं तु शेषपदत्व-प्रयुक्तमिति चेत्। किं तावता। प्रातिपदिकप्राधान्यानिरासात्। अथैतावता न परितुष्यसि तर्ह्यदितिपदोपात्तोऽदितिः पाशान्प्रमुमु[4]क्त्वित्यादिरन्यो दृष्टा-न्तो[5]स्तु। तत्र बहुवचनानुरोधेन बहुपाशयुक्तेषु पशुगणेषु पाशमन्त्र-स्योत्कर्षमकृत्वा प्रातिपदिकानुरोधेनैकपाशयुक्ताग्नीषोमीयपशुप्रकरण एव निवेश इति नवमे व्युत्पादितत्वादिति ध्येयम्॥

लक्षणायां गौणीतौल्यमाशङ्क्य निराह—**न चेति**। घोषाधार-तीरसंबन्धवत्त्वमेव परंपरया तदाधारत्वमिति वादिनं प्रत्याह—**तीरेति**।

---

[1] वप्रयुक्तबल—**क.** [2] तीरानुकूलमात्रस्याधा—**ग.** [3] चतुर्थेति—**नं. उ.** [4] मोक्तु—**नं. उ** [5] अस्तु इति न—**नं. उ.**

अनुव्याख्यानोक्तं सादृश्यस्य गौणाभेदत्वं तु चैत्रे शूरत्वेन सिंहाभेदे सत्यपि औत्सर्गिकस्य पदार्थतावच्छेदकसिंहत्वेनाभेदस्याभावात् ॥

उक्तं ह्यनुव्याख्याने—

"चेतनत्वादिसादृश्यं यद्यभेद इतीष्यते ।
अङ्गीकृतं तदस्माभिर्न स्वरूपैकता क्वचित्" ॥

इति ।

सन्न्यायरत्नावल्यां तु-तत्त्वमसीत्यत्रापि जगत्स्रष्टृपरामर्शिनस्तच्छब्दस्यैव त्वंशब्दवाच्ये जीवे-गौणवृत्त्याश्रयणेन तत्त्वंपदयोरुभयोरपि लक्षणाश्रयणस्य पराहतत्वादिति तत्पदस्यैव गौणत्व-

---

तीरस्य घोषं प्रत्याधारताया इत्यर्थः । तथाच लक्षणायां प्रधानप्रातिपदिकार्थस्यैव बाधात्सा जघन्येति भावः ॥

ननु—सिंहश्चैत्र इत्यत्र गौण्या[1] सिंहसदृशश्चैत्र इत्यर्थः । तत्र सादृश्यविशिष्टचैत्रयोरभेदस्य मुख्यत्वादभेदस्य गौणतोक्तिरयुक्तेत्यत आह—अनुव्याख्यानेति । अभेदवदैवता इत्यादि प्रागुदाहृतानुव्याख्यानोक्तमित्यर्थः । पदार्थतावच्छेदकादन्येन धर्मेणाभेदोस्तीत्यत्र संमतिमाह—उक्तं हीति । "पृथगुपदेशादि"त्यधिकरणानुव्याख्यान इत्यर्थः ॥

सुधापक्षे प्राचीनटीकाविरोधनिरासाय तदुक्तमनूद्य तदभिप्रायमाह—न्यायरत्नावल्यां त्विति । तत्पदस्यैव गौणत्वमुक्तमित्यन्वयः । न तु सुधापक्ष इव सामानाधिकरण्यं गौण[2]मित्युक्तमित्येव-

[1] ण्यां सि—ए. उ.　[2] ण्यमित्यु—ए. नं.

मुक्तम् । तदपि तत्त्वमसीत्यादिप्रस्तुतपरमेव । फलतः सुधोक्तसादृश्याभेदपर्यवसितं च ॥

सुधामतेपि सिंहस्याध्ययनमित्यादौ सामानाधिकरण्याभावात्सिंहप्रातिपदिकमेव सदृशे गौणम् । अत एव न्यायामृते तत्पदस्यैव गौणत्वमुक्तमस्माभिः ॥

[1] तर्हि लक्षणाया जघन्यत्वे अनुगतो हेतुः क इति चेदुच्यते । गौण्यां सादृश्यान्तर्गणिकभेदे सत्यपि सादृश्यत्व[2]रूपेणानुगते तात्पर्यमित्यै[3]कार्थ्य[4]घटादि[5]पदादाविव तात्पर्यविषये द्राग्धीः । लक्षणायां तु क्वचित्संबन्धे तात्पर्यं, क्वचित्तद्द्वारा-

कारार्थः । प्रस्तुतेति । तेन सिंहश्चैत्र इत्यादौ पदद्वयास्वारस्याभावादव्यापकत्वं न्यायस्य न दोष इति भावः । सुधोक्तसादृश्याभेदेति । सामानाधिकरण्यं गौणमित्यस्यापि सादृश्याभेदाभिप्रायकत्वादिति भावः । कुत एव[6]मित्यत आह—सिंहेति । तर्हीति । गौण्यामेकमेव पदमस्वरसं लक्षणायां पदद्वयमित्यस्य तत्त्वमसीति प्रस्तुतवाक्यमात्रपरत्वे गङ्गायां घोष इत्याद्यनुगतो हेतुः क इत्यर्थः । गौण्यामिति । तात्पर्यविषये द्राग्धीरित्यन्वयः । अन्तर्गणिकभेद इति । शूरत्वेन पवित्रत्वेन ज्ञानानन्दाद्यात्मकत्वेनावयवसंस्थानविशेषत्वादिरूपेण नानात्वेपीत्यर्थः । संबन्ध इति । मञ्चाः क्रोशन्तीत्यादौ संबन्धे गङ्गायां

[1] अतएवेत्यादिनास्ति–सु. क. [2] तेनानु–सु. [3] त्येका–सु. ग. [4] र्थ–सु. र्थेघ–ग. क. [5] शब्दादवत्तात्प–रा सु क. दिशब्दवत्ता–सु. [6] एवमिति नास्ति–ङ.

पूतत्वे, क्वचित्सी[1]तलत्वादाविति, वैरूप्यान्नानार्थाक्षादिशब्दा[2]दाविव विलम्बेन तद्धीरिति लक्षणा जघन्या ॥

केचित्तु गौण्यां सादृश्यं सर्वत्र विशेषणं, लक्षणायां संबन्धस्तु क्वचिदेवेति लक्षणा जघन्येत्याहुः ॥

अन्येतु—पूर्वपक्षोक्तौ विलम्बौ मुख्यार्थासंस्पर्शश्च लक्षणायां प्रायिकत्वाज्जातिप्रयुक्तौ। गौण्यां तु काचित्कत्वान्न तत्प्रयुक्ताविति गौणीजातीया-

---

घोष इत्यादौ पूतत्वे, इदं गङ्गोदकमित्यादौ शीतलत्वादावित्यर्थः ॥

स्वमते जघन्यत्वमुपपाद्य परोक्तं जघन्यत्वप्रकारत्रयमाह— **केचित्त्वित्यादिना** । **विशेषणमिति** । वृत्तिजन्यधीविषय इत्यर्थः । **क्वचिदेवेति** । मञ्चाः क्रोशन्तीत्यादावित्यर्थः । गङ्गायां घोष इत्यादौ पूतत्वादेरेव विशेषणत्वादिति भावः । अत्रारुचिबीजं तु—मुख्यार्थसंबन्धोपि सर्वत्र विशेषणमेवेत्यर्थस्य लाक्षणिकादेः शक्यार्थसंबन्धित्वा[3]दिनैव लक्ष्याद्युपस्थापकत्वसमर्थनवादे व्यक्तत्वादिति ध्येयम् । **पूर्वपक्षोक्ताविति** । पूर्वपक्षग्रन्थे सिंहशब्दस्य येन माणवकेनान्वयानुपप[4]त्तिस्तत्रैवेत्यादिना नयविवेकोक्तरीत्येत्यादिना चोक्तो[5] विलम्ब[6] इत्यर्थः । **मुख्यार्थासंस्पर्शश्चेति** । पूर्वपक्षोक्त इति विपरिणामेनानुषङ्गः ।

---

[1] च्छी–**ग. क.** [2] दिवद्धि–**रा. सु. ग. क.** [3] न्धत्वा–**नं. उ.** [4] त्यादिना नयविवे–**उ.** [5] क्तौवि–**उ. ए.** [6] म्बौ इ–**उ. ए.**

ल्लक्षणाजातीयं जघन्यमित्याहुः ॥

अपरे तु न क्वापि लक्षणायां मुख्यार्थसंबन्धे तात्पर्यम् । किं तु तत्परिचायिते तीरादिगते विशेषे। एवं चोक्तौ विलम्बौ मुख्यार्थस्य तात्पर्या-संस्पर्शश्च लक्षणायां सार्वत्रिकाः। गौण्यां तु न क्वचिदपीति गौणी ज्यायसी । सिंहस्याध्ययन-मित्यादावप्येकत्र निर्णीतः शास्त्रार्थ इति न्याया-

---

प्रायिकत्वात् बाहुल्यात् । जातिप्रयुक्तौ औत्सर्गिकौ, मुख्यार्थासंस्पर्शो जातिप्रयुक्त इत्यपि योज्यम्। **न तत्प्रयुक्ताविति।** सिंहस्याध्ययनमित्या-दिना लक्षणाया एवाग्रेसरत्वेनेत्यादिना च पूर्वपक्षोक्तौ विलम्बावित्यनु-कर्षः। अत्रापि स्वोक्तदिशा गौणीमात्रतो न लक्षणामात्रस्य जघन्यत्वम्। यत्र गौण्यां विलम्बस्तत्र[1] जघन्यत्वाभावात्। किं तु तज्जातीया[2]तज्जातीय-स्येत्यरुचिबीजं ध्येयम् । **तत्परिचायितेति** । तटस्थ[3]भूतेन तेन व्यावर्तित इत्यर्थः। **विशेष इति**। पूतत्वशीतलत्वादिरूप इत्यर्थः। **उक्ताविति**। पूर्वपक्षदशायामुक्तावित्यर्थः ॥

ननु—सिंहस्याध्ययनमित्यादौ अध्ययनान्वयानुपपत्त्या माण-वकपरत्वेन मान्द्यादिति गौण्यामपि विलम्ब उक्तः पूर्वपक्षग्रन्थ इत्यत आह—**सिंहस्येति**। शास्त्रार्थ इत्यनन्तरमपरत्रेति शेषः। एवं प्रकृतेपि सिंहो माणवक इत्यत्र निर्णीतः शास्त्रार्थो माणवकान्वयानुपपत्त्या माणवकपरत्वरूपोपरत्र सिंहस्याध्ययनमित्यादावपि ग्राह्य इत्यर्थः ॥

---

[1] तोज–**उ. ए.** [2] चतज्जा–**ए.** [3] स्थीभूतेन व्यावर्ति–**उ.**

द्बुद्धिस्थमाणवक[1]परत्वम्। गौडमठे चैत्रगृहे मैत्रो वसतीत्यादावप्यव्यवहितत्वसादृश्याद्गौडमठशब्द-श्चैत्रगृहे गौण एव। न तु सबन्धाल्लाक्षणिकः। उक्तरीत्या बाधलाघवादित्याहुः॥

तस्माद्गौणीतो लक्षणा जघन्या।

तदुक्तं सन्न्यायरत्नावल्याम् 'पूर्वायोगे परग्रहः' इत्यनुव्याख्यानव्याख्यानावसरे–परममुख्यार्था[2]-संभवे मुख्यार्थः स्वीकार्यः। तदसंभवे गौणार्थः। तदसंभवे लाक्षणिक इति॥

अत्र चानुव्याख्यानोक्त[3]पूर्वत्वं,

". . . . विष्णावन्यत्र मुख्यता।

---

यत्तु गौडमाठ इत्यस्य गौडमठसामीप्यलक्षणकत्वमुक्तं तन्नेत्याह–**गौडमठ इति**। गौडमठैकदेशो गौडमठाव्यवहितो यथा तथा चैत्र-गृहमपीत्यर्थः। **उक्तरीत्येति**। नीलंघटमानयेत्यादौ विशेष्यविभक्ते-रित्यादिनोक्तरीत्या चैत्रमठपदगतविभक्तिमात्रबाधादित्यर्थः। अत्रापि मञ्चाः क्रोशन्तीत्यादौ मुख्यार्थसंबन्धे तात्पर्यदृष्टेर्न[4]क्वापि तत्र तात्पर्य-[5]मित्ययुक्तमित्यादि ध्येयम्। सुधादावस्फुटत्वादाह—**तदुक्तमिति**॥

ननु–सन्न्यायरत्नावल्युक्तिरयुक्ता। "तस्मात्परममुख्यत्वं विष्णा-वन्यत्र मुख्यते" ति श्लोके गौणीतो लक्षणायाः पूर्वमुद्दिष्टत्वात्तदनुरोधेन लक्षणायोगे गौणग्रह इत्येव वक्तव्य[6]त्वादित्यत आह—**अत्र चेति**।

---

[1] कान्वयानुपपत्त्यैव माणव–रा. सु. ग. क. [2] ख्यासं–सु. क. [3] क्तं पू–रा सु.ग.क. [4] नक्वा-उ. [5] र्यमित्याा ध्ये–नं. उ. [6] व्यमित्यत–नं. उ. ए.

उपलक्षणा च गौणी च त्रिस्रः शब्दस्य वृत्तयः"।
इति न व्यवहितोद्देश्याभिप्रायेण । किंतु,
"प्रयोगयुक्तसादृश्यं संबन्धो वाप्यमुख्यतः"।
इति अव्यवहितलक्षणोक्त्यभिप्रायेण । अत एव तत्रो[1]त्तरत्र—

"मुख्यमात्रतया रूढं सर्वमभ्युपगम्यते ।
सर्वेषामपि शब्दानां गौणाद्यं तद्योगतः ॥"

इति गौणस्य प्राथम्योक्तिः । न्यायविवरणेपि रूढोपचारो रूढलक्षणा उपचारो लक्षणेति गौण्याः प्राथम्योक्तिः । गौण्यामपि अनिरूढगौणी निरूढ-गौणीतो जघन्या । एवं लक्षणायामपि द्रष्टव्यम् ॥

लक्षणातो गौण्याः प्राबल्यनिर्णयः ॥ ७२ ॥

---

**अव्यवहितेति** । पूर्वत्रिपाद्या प्रकृतलक्षणेत्यर्थः । कुत एवं व्यवहिता-देशाभिप्रायेण गौण्या[2] जघन्यत्वोक्तिरनुव्याख्यानाभिमता किं न स्या-दित्यत आह—**अत एवेति** । गौण्या ज्यायस्त्वादेवेत्यर्थः । न्यायविव-रणनिर्देशादपि सूचितमित्याह- [3]**न्यायविवरणेपीति** । **गौण्यामपीति** ॥

एतेनामुख्यवृत्तिष्वपि स्वीकारे तारतम्यमस्ति अर्थप्रतीतिसन्नि-कर्षविप्रकर्षाभ्यामिति सुधोक्तिरपि व्याख्याता भवति ॥

लक्षणातो गौण्या. प्राबल्यनिर्णय ॥ ७२ ॥

---

[1] तत्रैवोत्त–**सु. ग. क.** [2] गौण्या इति न–**उ.** [3] न्यायविवरणेपीति इति नास्ति–**नं. उ. ए.**

## तत्पुरुषे लक्षणादिभङ्गः ॥ ७३ ॥

यदुक्तं मणौ राजपुरुष इत्यादितत्पुरुषे राजपदस्य संबन्धे संबन्धिनि वा लक्षणेति । तन्न । त्वन्मते नीलोत्पलमिति कर्मधारये नीलोत्पलयोरभेदस्येवेहापि राजपुरुषयोः संबन्धस्य वृत्तिं

## तत्पुरुषे लक्षणादिभङ्गः ॥ ७३ ॥

लक्षणादिस्वरूपं तत्प्राबल्यादिकं च निरूप्येदानीं तस्य विषयव्यवस्थां[1] दर्शयितुं परोक्तं निराह—**यदुक्तमिति।** शब्दखण्डे बहुव्रीहिनिरूपणानन्तरमुक्तमित्यर्थः । कर्मधारयस्यापि तत्पुरुषत्वात्तत्र च[2] लक्षणानुक्तेराह—**राजपुरुष इत्यादि** । **तत्पुरुष इति** । षष्ठ्यर्थसंबन्धे निरूढलक्षणयैव राजसंबद्धपुरुषबुद्ध्युपपत्तेरिति मण्युक्तेराह—**संबन्ध इति** । लाघवयुक्तयेति भावः । व्याख्यातृवचनानुरोधेनाह—**संबन्धिनि वेति।** वृत्तिरेवान्यलभ्यसंबन्धादावयुक्ता कुतस्तद्विशेषलक्षणावकाश इति भावेनाह—**त्वन्मत इति** । **कर्मधारयेति** । कर्मधारये तु न शक्तिर्न वा लक्षणा तेन विनापि विवक्षितार्थान्वयो[3]पपत्तेरिति मण्युक्तेरिति भावः ॥

[1] स्थादि—**ए.**　[2] च इति नास्ति—**नं. उ**　[3] यानुप—**नं. उ.**

विनैवान्वयतया भानोपपत्तेः । मन्मते च पुरुषपदेनैव राजान्वितपुरुषाभिधानसंभवात् । अन्यथा कर्मधारयेप्यभेदेऽभिन्ने वा नीलपदस्य लक्षणा स्यात् ॥

न च विरुद्धविभक्त्य[1]नवरुद्धनामार्थयोरभेदेनैवान्वयनियमान्न संबन्धोन्वयतया भातीति वाच्यम् । घटो न पटश्चन्द्र इव मुखमित्यादौ पट नञ्पदार्थयोः पटाभावयोः, चन्द्रेवशब्दार्थयोः चन्द्रसादृश्ययोः, चाभेदाभावात् ॥

तस्मात्कर्मधारये अभेदस्येव विग्रहसमानार्थे षष्ठीतत्पुरुषेपि संबन्धस्य योग्यतादिवशादन्वय-

ननु—भवन्मतेऽन्वयतया भानानङ्गीकाराल्लक्षणयैव सबन्धधीर्वाच्येत्यत आह—**मन्मत इति** । अन्विते शक्त्युपगमादिति भावः । अन्वयबोधस्य वृत्तिं विना लाभेपि न विवक्षितार्थान्वयधीलाभः अतो लक्षणा युक्तेत्याशङ्क्य निराह—**न च विभक्त्यनवरुद्धेति** । नीलोत्पलं राजपुरुष इत्यादौ श्रुतविभक्तिः समुदायादुत्पन्नैव न तु समासावयवप्रातिपदिकात् तत उत्पन्नं पूर्वोत्तरपदस्थं विभक्तिद्वयं तु "सुपो धातुप्रातिपदिकयो"रिति लुप्तमिति विभक्त्यनवरुद्धेत्युक्तम् । विभक्त्यर्थानवरुद्धेति पाठे सामानाधिकरण्यायोग्याभिन्नाविभक्त्यर्थेनाप्रतिबद्धेत्यर्थः । नायं नियमो व्यभिचारादित्याह—**घट इति** । न[2] घट इत्यत्र नञोव्ययत्वेन लुप्तविभक्तिकतया विभक्त्या वा तदर्थेन वानवरुद्धं नेति पदम् । तथा चन्द्र इवेत्यत्रापि ध्येयम् । **विग्रहेति** । राज्ञः पुरुष

[1] क्त्यर्थानव–**रा. सु. ग.** [2] प–**उ. ए.**

तयैव भानमस्तु। नानाविधो ह्यन्वयः। कर्मधारये दर्शनमात्रेण तत्पुरुषेऽभेदान्वयापादने च विपरीतं किं न स्यात्॥

किंचैवं पाचक इत्यादिकृदन्तेषु पचिधातोरेवाकाद्युक्तकर्त्रादिना औपगव इत्यादितद्धितेषु उपगुशब्दस्यैवाणाद्युक्तापत्यादिना घटमित्यादा-

इति समासार्थप्रदर्शकवाक्यसमानार्थ इत्यर्थः। बहुव्रीहौ नित्यसमासविधानेन विग्रहसमासयोर्भिन्नार्थत्वेपि विभाषाधिकारे विहितषष्ठीतत्पुरुषस्य विग्रहतुल्यार्थत्वात् विग्रहे च संबन्धस्य भानात् समासेपि तद्भानमाकाङ्क्षायोग्यतादिवशात्स्यादिति भावः। राजत्वविशिष्टपुरुषस्यानयनाद्ययोग्यत्वेनाभेदस्य बाधात्संबन्धस्य योग्यतादिवशादन्वयतयैवेत्युक्तम्। अभेदान्वयस्य[1]बाधात् कोनामान्वय इत्यत आह—**नानाविध इति**। तत्स्वामिकत्वादिरूपोनेकविध इत्यर्थः। **विपरीतमिति**। तत्पुरुष इव कर्मधारयेपि संबन्धित्वरूपान्वयधीः [2]स्यादित्यर्थः॥

यदि संबन्धोऽन्वयतया न भायात्तर्हि कृत्तद्धितकारकविभक्त्यन्तेष्वपि प्रातिपदिकस्य लक्षकता स्यादित्याह—**किंचैवमिति**। डुपचष् पाक इत्यस्मात् 'ण्वुल्तृचा'विति सूत्रेण कर्त्रर्थे ण्वुल्प्रत्यये तस्य 'युवोरनाका'वित्यकादेशे 'अत उपधाया' इति वृद्धौ च पाचक इति रूपम्। तत्र ण्वुल्प्रत्ययस्य 'कृदतिङिति' सूत्रेण कृत्संज्ञिकत्वात्कृदन्तेष्वित्युक्तम्। **औपगव इति**। उपगुशब्दादपत्येर्थे

[1] स्य बो—ए.　　[2] यः स्या—नं. उ.

वपि घटादिप्रातिपदिकस्यैव द्वितीयोक्तकर्मत्वादिना सह संबन्धे लक्षणा स्यात् ॥

एतेन—राजपुरुषं राज्ञः पुरुषं राजसंबन्धिनं पुरुषमानयेत्यादेः पर्यायत्वात्तत्पुरुषे राजसंबन्धी[1] अन्वये प्रतियोगितया भाति राजसंबन्धिनः पुरुषाभेदस्तु अन्वयतया अन्वयप्रतियोग्युपस्थितिश्च न वृत्तिं विनेति वृत्त्यर्थं लक्षणा । नीलोत्पलमित्यत्र तु नीलाभिन्नं नान्वयप्रतियोगि किंतु नीलपदोक्त[2]नीलमेव नीलाभेदस्त्वन्वय[3] एवेति न तत्र लक्षणेति निरस्तम् । नीलोत्पलं नीलमुत्पलं नीलाभिन्नमुत्पलमित्यादेरपि पर्यायत्वात्तत्रापि नीलाभिन्नमन्वयप्रतियोगि

'तद्धिता' इत्यधिकारे 'तस्यापत्यमिति' सूत्रेणाण्प्रत्यये[4] आदिवृद्धौ गुणावादेशयो रूपम्। **द्वितीयोक्तेति**। 'कर्मणि द्वितीये' त्यनुशासनादिति भावः। षष्ठ्यन्तानां लक्षणेत्यनेन, तृतीयान्तानां च सहेत्यनेनान्वयः। तत्रान्वयस्यान्यलभ्यत्वान्न लक्षणा चेत्तर्हि तत्पुरुषेपि तथा स्यात्। समास एवायं नियमो न त्वन्यत्रेत्यस्य नियामकशून्यत्वादिति भावः। प्रागुक्तदृष्टान्तवैषम्यमनूद्य निराह—**एतेनेति**। निरस्तमित्यन्वयः। **अन्वयप्रतियोग्युपस्थितिश्चेति**। राजपदेन राजसंबन्धीत्यर्थस्य राजपदे लक्षणावृत्तिं विना अलाभादित्यर्थः। **नीलमेवेति**। नीलगुणयुक्त-

1 न्धोन्वय-सु. 2 क्तं नी-रा. सु. ग. 3 यतयेति-रा. सु. ग.
4 तद्धितेष्वचामादेरित्यादिवृ-नं. उ.

नीलाभिन्नस्योत्पलाभेदस्तु अन्वय इत्यपि सुवच-त्वात् ॥

तस्माद्व्यासे यः संबन्धो विभक्ति[1]सापेक्षो भासते स एव समासे तदनपेक्षोऽन्वयतया भासत इत्यु[2]क्तम् ॥

वस्तुतस्तु दधि पश्येत्यादौ लुप्तया द्वितीययेव गर्गा हरीतकीत्यादौ लुप्तेन तद्धितेनेव, अस्यापत्यं इः इत्यादौ लुप्तेन अ इति प्रातिपदिकेनेव, व्यतिस इत्यादौ लुप्तेनास्तिधातुनेवेहापि लुप्तया स्मृतया षष्ठ्यैव स्वार्थोपस्थितिः। अन्यथा ह्यलु-

मेवेत्यर्थः । तस्मादिति । कर्मधारयादिवैषम्यायोगादित्यर्थः । व्यास इति । विग्रहवाक्ये ॥

ननु—व्यासे विभक्तिसापेक्षः कथं समासे तन्निरपेक्षो भासेत । अन्यथा व्यासेपि तथा भायादित्यनुशयादाह—वस्तुतस्त्विति । लुप्तयेति । स्वमोर्नपुंसकात् इति सूत्रेण लुग्विधानाल्लुप्तयेत्युक्तम् । गर्गा इति । गर्गस्य गोत्रापत्यानीत्यर्थे "गर्गादिभ्यो यञ्" इति यञि कृते यञञोश्च इति बहुत्वे यञो लुकि सति गर्गा इति रूपम् । गार्ग्यः गार्ग्यौ गर्गा इति । हरीतकीत्ययं शब्दः प्राग्लक्षणादेरभिधातो भेदसमर्थनवादे विवृतः । अ इति कस्यचिन्नाम । अस्य अकारनामकस्यापत्यमित्यर्थे अत इञ् इति इकारप्रत्यये यस्येति चेति सूत्रेण प्रातिपदिकाकारलोपे इरिति प्रत्ययस्यैव सुबन्तस्य श्रवणम् । व्यतिस इति । विवृतमेतदुपसर्गाणां वाचकत्वोक्तिवादे । स्वार्थेति । संबन्धोपस्थितिरित्यर्थः ॥

[1] क्त्यादि-सु.　[2] त्यस्तु-रा. सु. ग.

म्रस्य दधिप्रातिपदिकादेरेव कर्मत्वादौ लक्षणा-स्यात् ॥

यदि च दधि कर्मत्वं दर्शनं कृतिः इत्यादा-वन्वयाप्रतीतेः कर्मत्वं विभक्त्यैवाभिधेयं तर्हि राजा संबन्धः पुरुषः इत्यादाव[1]न्वयाप्रतीतेः संबन्धोपि षष्ठ्यैवाभिधेयः ॥

न च काष्ठकरणकतण्डुलकर्मकपाककृतिरित्या-दिसमासे विभक्त्यनभिहित[2]स्यान्वयो दृष्ट इति

---

दधि पश्येत्यादि वैषम्यमाशङ्क्य साम्येन निराह—यदि चेति । संबन्धोपि षष्ठ्यैवाभिधेय इति । प्रकृते षष्ठ्याः लुप्तत्वेपि स्मृतया तया[3]भिधेय इत्यर्थः ॥

एतेन मणौ राज्ञःपुरुष इति विग्रहे समासविधानात्स्मृता लुप्ता षष्ठी संबन्धस्मारिकेति पक्षमनूद्य राजपुरुषमानयेत्यस्मात्पूर्वं नियमेन विग्रहास्मरणादिति यद्दूषणमुक्तं तन्निरस्तम् । दधि पश्येत्यादिष्वपि तथात्वापरिहारादित्यग्रे व्यक्तत्वात् । दधि पश्येत्यादावसमासे विभक्त्युप-स्थितस्य संबन्धस्य[4] भाननियमेपि समासे नियमो नास्ति । क्वचिद्विभ-क्त्यनुक्तस्यापि अन्वयप्रतीतेरिति भावेनाशङ्क्य निराह—न चेति । काष्ठैस्तण्डुलान्पचतीत्यस्यार्थकथनं काष्ठेत्यादि । समास इति । स्वादु दधीत्यादिकर्मधारयसमास इत्यर्थः । क्वचित्समासे विभक्त्य-नभिहितस्याप्यन्वयदर्शनेन स्वादु दधीत्यादावपि स्मृतविभक्त्यनुक्तस्यापि

---

[1] वप्य–सु. क. [2] स्याप्यन्व–रा. सु. ग. [3] यैवाभि–उ. [4] भानं समास इति नियमो -उ.ए. नं

**वाच्यम् । स्वादुदधिपश्येत्यादिसमासे दधिपदस्यैव कर्मत्वे लक्षणापातात् । दधिकर्मत्वदर्शनकृतय इत्यादिसमासेपि विभक्तिं विनान्वया प्रतीतेः । काष्ठकरणकेत्यादिसमासेऽन्वयधीस्तु विभक्त्यर्थोपरक्तधर्मिणोभिधानात् । इह तु धर्मिणः पुरुषपदेनैवोक्ततया विग्रहे षष्ठ्या निष्कृष्टस्य संबन्धस्यैवोक्ततया च तदेकार्थे समासेपि तस्यैव लक्षणीयत्वात् । पुरुषस्य संबन्धं प्रत्या-**

---

कर्मत्वस्य दधिपदाल्लक्षणयोपस्थितस्यान्वयसंभवेन दधिपदस्य लक्षकत्वं स्यादित्यर्थः । यद्वतं कर्मत्वं विभक्त्यभिधेयमित्युक्तम् तद्वाचिपदस्यैवेत्येवकारार्थः । स्वाव्याघातकमेतादिति भावः ॥

विभक्त्यनभिहितस्याप्यन्वयदृष्टेर्विभक्त्या[1]भिधानं संबन्धस्य नापेक्षितमिति यथोच्यते त्वया तथा क्वचित्समासे विभक्तिं विनान्वयाप्रतीतेः स्मृतविभक्त्या[2]भिधानमावश्यकमित्यपि वक्तुं शक्यमेवेति भावेनाह—**दधीति** । कथं तर्हि काष्ठकरणकेत्यादावन्वयधीरित्यत आह—**काष्ठेति** । राजपुरुषेत्यादावपि तथैवास्तु । किं स्मृतषष्ठ्या[3]संबन्धबोधाङ्गीकारेणेत्यत आह—**इह त्विति**। षष्ठ्यापि धर्मिणो अभिधाने समासे षष्ठीस्मृतिर्नापेक्षिता । अन्यतोपि धर्मिणो लाभादित्यत आह—**षष्ठ्येति** । निष्कृष्टस्य धर्मि[5]विनाकृतस्य । **लक्षणीयत्वादिति** । सा च लक्षणा दधिपश्येत्यादाविव न युक्तेति स्मृतयैव षष्ठ्या संबन्धोऽभिधेय इति भावः ॥

नन्वेवमपि तत्पुरुषे लक्षणावश्यमाश्रयणीया विभक्त्यभिहित संबन्धाश्रयतावाचिनः कस्य चिदभावादित्यत आह—**पुरुषस्येति** ॥

---

[1] क्त्यभि-**नं. उ. ए.** [2] क्त्याप्यभि-**नं. उ. ए.** [3] स्मैतेत्यधिकम्-**उ.**
[4] णावि-**नं. उ.**

श्रयता राज्ञः पुरुष इत्यत्रैवान्वयतया भासताम् ॥

न चैवं नीलघट इत्यत्रापि नीलरूपं प्रत्याश्रयतान्वयतयैव भासेतेति नीलपदं नीलरूपाश्रयलक्षकं न स्यादिति वाच्यम्। इष्टापत्तेः ॥

अन्यथा व्यतिस इत्यादावपि लुप्तस्यास्तिधातोरर्थः व्यतीत्युपसर्गेण वा सेप्रत्ययेन वा लक्ष्येत। समासश्रवणकाले विग्रहस्थषष्ठ्याः स्मरणनैयत्ये च दधि पश्येत्यादौ[1] द्वितीयादिस्मरण[2]वत्तदर्थधीरेव मानम्।

किञ्च षष्ठीस्मृत्यभावे त्वदभिमता लक्षणैव न सिध्येत्। तथाहि—संबन्धे संबन्धिनि वा लक्षणा नतावद्वृत्तिं विनैव संसर्गमर्यादया प्रती-

**अन्यथेति**। समभिव्याहारलभ्यस्यापि लक्ष्यत्व इत्यर्थः। **लक्ष्य[3]तेति**। न चेष्टापत्तिः। उपसर्गप्रत्ययसमभिव्याहारेण वा स्मृतधातुना वा व्यत्यस्तोसीत्यर्थस्योपगमादिति भावः। षष्ठीस्मरणनैयत्यं नेत्युक्तं मणावित्यत आह—**समासेति**। **तदर्थधीरेवेति**। सा लक्षणयोपपन्ना चेद्दधि पश्येत्यादावपि तथा स्यादिति भावः ॥

लक्षणावादिनापि समासे षष्ठीस्मृतिरवश्यं वाच्येति वक्तुमाह—**किञ्च षष्ठीति**। **न सिध्येदिति**। तात्पर्यानुपपत्तिव्यतिरिक्तत्तद्बीजाभावात्तत्र च पक्षे षष्ठीस्मृतेरावश्यकत्वं वक्ष्यामि इति भावः। प्रतीतान्वयानुपपत्तिर्वा आनयनानुपपत्तिरेव वा बीजमस्त्वित्यत आद्य आह—**न तावदिति**। अभेदान्वयसंभवेनान्वयानुपपत्तिर्नेति भावे-

[1] श्येदित्या–रा. ग [2] ण इव–रा: सु. ग. क. [3] क्ष्ये–ग.

तान्वयानुपपत्त्येति युक्तम् । त्वन्मते विभक्त्य[1]-नवरुद्धप्रातिपदिकार्थयोरभेदरूपेऽन्वये व्युत्पत्तेः । इह च राज्ञोऽपि पुरुषत्वेन राजपुरुषयोरभेदाबाधात् । नीलघट इत्यत्र तु त्वन्मते नीलरूपं न घट इति नील[2] रूपे लक्षणास्तु । न त्वत्र ॥

किं च यदि राजपुरुषयोः संबन्ध एवं वृत्तिं विना संसर्गमर्यादया भासेत कथं तर्हि संबन्धे लक्षणावृत्तिः ॥

नापि राज्ञोऽस्मदादिकर्तृकानयनान्वयानुपपत्त्या लक्षणा । राजपुरुषस्तिष्ठतीत्यादौ तदभावात् ॥

तस्माद्राजपदस्य संबन्धिनि निरूढतात्पर्यानुपपत्त्यैव निरूढलक्षणा वाच्या । इह चोक्ततात्पर्यग्राहकस्यान्यस्याभावाद्राजपदस्य तत्पुरुषस्थत्व-

---

नाह—त्वन्मत इति । व्युत्पत्तेरिति । नीलोत्पलमित्यादाविति-भावः । राजपुरुषमित्यत्र नीलोत्पलमित्यादाविव श्रुतविभक्तेः समासादुत्पन्नत्वेन प्रातिपदिकद्वयस्य विभक्तिद्वयस्यापि समासावयवस्य लुप्तत्वेन विभक्त्यनवरुद्धप्रातिपदिकयोरित्युक्तम् । यदि व्युत्पत्तिवशादभेदान्वयस्तर्हि नीलघट इत्यादावपि रूपरूप्यभेदधीः स्यादित्यत आह—नीलेति । लक्षणेति । नीलाश्रये लक्षणेत्यर्थः ॥

द्वितीयं निराह—नापीति । एवं प्रसक्तं निरस्य प्रतिज्ञातं सहेतुकमुपसंहरति—तस्मादित्यादिना । लोपाज्ञस्य समासेऽर्थबोधो

---

[1] त्यर्थान-रा. क. [2] लशब्दे-रा. लपदे-सु. ग.